UGC JOURNAL NO-40960

ISSN-0974-8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

**(A REFEREED QUARTERLY RESEARCH JOURNAL)**

४३ वर्षे द्वितीयोऽङ्कः (अप्रैलमासाङ्कः) २०१८ ई०






प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

**नवदेहली-११००१६**

UGC JOURNAL NO-40960 ISSN-0974-8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUARTERLY RESEARCH JOURNAL)

४३ वर्षे द्वितीयोऽङ्कः (अप्रैलमासाङ्कः) २०१८ ई०

प्रधानसम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

कुलपतिः

सम्पादकः

**डॉ० शिवशङ्करमिश्रः**

सहसम्पादकः

**डॉ० ज्ञानधरपाठकः**




प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

**नवदेहली-११००१६**

प्रकाशक:
**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**
(मानित-विश्वविद्यालयः)
कुतुब इन्स्टीट्यूशनल एरिया, नवदेहली-११००१६



ISSN :- 0974 - 8946

४३ वर्षे द्वितीयोऽङ्कः (अप्रैलमासाङ्कः) २०१८ ई०



मुद्रकः - **अमरप्रिंटिंगप्रैसः**, दिल्ली

प्रधानसम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

कुलपतिः

सम्पादकः

**डॉ० शिवशङ्करमिश्रः**

सम्पादकमण्डलम्

**प्रो० जयकान्तसिंहशर्मा**

**प्रो० हरेरामत्रिपाठी**

**प्रो० भागीरथिनन्दः**

सहसम्पादकः

**डॉ० ज्ञानधरपाठकः**

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया शोध-पत्रिका

- ❖ एषा त्रैमासिकी शोध-पत्रिका।
- ❖ अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।
- ❖ अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।
- ❖ अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।
- ❖ अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।
- ❖ प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।
- ❖ अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते। प्रकाशितशोधसामग्री लेखकस्यास्ति अतः लेखस्य मौलिकतादिविषये सम्पूर्ण दायित्वं लेखकस्य भविष्यति न तु सम्पादकस्य न वा प्रकाशकस्य।
- ❖ पत्रिकासम्बद्धन्यायालयीयविवादविषये दिल्लीन्यायालयक्षेत्रमेव परिसीमितमस्ति।
- ❖ अस्याः वार्षिकसदस्यताराशिः रु. १५०.०० पञ्चवार्षिकसदस्यताराशिः रु.७००.००, आजीवन-सदस्यताराशिः रु. १५००.००।। सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्रीराष्ट्रिय-संस्कृतविद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।
- ❖ पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

**रस एव परं ब्रह्म रस एव परा गतिः।**

राद्धान्तोऽयं सर्वशास्त्रनिष्कर्षतया संवेद्यस्तदेव **'रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति'** इत्यादिरूपं तैत्तिरीयं वाक्यं प्रमाणास्पदं समुपलभ्यते। न हि रसमन्तरा प्राणिनामपि प्राणित्वमुदेति। तदेवोक्तम्- को ह्येवान्यच्च कः प्राण्यादिति अर्थात् **'अन प्राणने'** इत्यस्य प्रकृतित्वात् रसस्यैव सर्वप्राणनमभिव्यज्यते। अयञ्च रसः प्रत्यक्षमिव सहृदयानामजस्रमनुभूतः। लोकोत्तराह्लादजनकत्वेनास्य लौकिकसाधनाजन्यत्वमपि प्रसिद्ध्यत्येव। अयञ्चानुक्षणं स्वकीयमभिनवं रूपमवधार्य सुधीजनहृदयानावर्जयत्येव, अजस्रप्रवहत्त्वान्नास्य क्षणभङ्गुरता, आत्ममयत्वान्नास्य जनिकर्तृता, अपितु चितिरूपतया सर्वत्राप्यनुस्यूतत्वाद् ब्रह्मरूपतयैव ब्रह्मविदां वादानुरोधेनावस्थानमस्य सर्वसिद्धान्तानतिशेते। तदेवोक्तमागमेषु-

**दुःखान्यपि सुखायन्ते विषमप्यमृतायते।**
**मोक्षायते च संसारो यत्र मार्गः स शाङ्करः॥**

अयमेव मार्गः रसमार्ग इति प्रचक्षते। तेन स्वाभाविक्येव रसमार्गेषु प्रवर्तना तत्र च कृतसाध्यतयेष्टसाधनतया च यावन्नोदेति ज्ञानं तावद्दूर एव रसोन्मुखप्रवृत्तिः सुधियामपि, अतोऽवश्यमेव प्रवर्तनार्थं तपःपूतान्तःकरणमनीषिणां धिषणैकसंवेद्यं शास्त्रमकारणमपि स्वाध्यायेषु विधेयम्। तदेव 'स्वाध्यायान्मा प्रमदितव्यम्' इत्यादिना श्रुतिरप्यादिशति। तानि च शास्त्राणि वेदपुराणश्रुतिस्मृत्यादीनि। स्मृतिष्वपि बहुविधानां शास्त्राणां समावेशः कृत एव। तेन सर्वत्राप्यात्मजनैः साफल्यार्थं शास्त्रेषु कृतभूरिपरिश्रमत्वेन भाव्यमेव सर्वैरपि। परन्तु सौभाग्यमेतत् भवति केषाञ्चिदेव विरलानां पुण्यवताम्। तदेवास्मिन् अमन्दानन्दसन्दोहे सर्वस्यापि लोकस्य प्रवृत्तिकरणार्थं प्रकल्पितेषूपायेष्वयमन्यतम उपायोऽबाधितश्च समवधारितः सुधीभिः। अद्यत्वे लोकंस्य चाकचिक्यबहुलात् चक्षुस्सदपि नेक्षते तत्त्वम्। तदेव शास्त्रं चक्षुरिति कृत्वा प्रबोधितं तत्त्वं नूनमेवापेक्षते। तत्रैव पत्रिकाप्रकाशनमन्यतमः प्रकल्पः। अयञ्च प्रकल्पो बहुवर्षेभ्यः प्रवहदादित्यकलां वरयते। तदेव साम्प्रतमपि स्वानुगुण्यं बिभ्रद् विदुषां पारेमोदायावतरति। अस्मिन् क्रमे- पाणिनीयव्याकरणे प्रस्थानान्तरसिद्धान्तानां समावेशः, न्यायशास्त्रानुशीलने शब्दशास्त्रस्योपयोगित्वम्, भासर्वज्ञीयमुपमान् : न्यायदर्शनेऽभिनवदृष्टिः, इत्यादिना नैकान् विषयान् क्रोडीकृत्य स्वकीयमसाधारणं कलेवरमुपपादयति, इदमेवास्या वैशिष्ट्यम्। विश्वस्मिन् यदेषावश्यमेव स्वकीयं वैशिष्ट्यं वर्तयिष्यते। अतोऽहमस्या अधीयताञ्च शुभं कामयमानः स्वकीयमाराध्यदैवतं समुपासये।

**प्रो. रमेशकुमारपाण्डेयः**
कुलपतिः

# सम्पादकीयम्

•संस्कृतं संस्कृतिश्चैव श्रेयसे समुपास्यताम्, •भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा, अनेन वचनद्वयेन देवगिरः गरिमगौरवो गीयते। वचनमिदं संस्कृतस्यानुपममाहात्म्यबोधनपरम्। संस्कृतस्य प्रतिष्ठितत्वात् सुप्रसिद्धत्वाच्च सम्पूर्णेऽस्मिन् जगति भारतस्य प्रतिष्ठा, भारतस्य गौरवम्, भारतस्य ख्यातिरिति। वस्तुतः भारतस्य प्रतिष्ठायां संस्कृतमेव मुख्यमिति तात्पर्यम्। संस्कृतिस्तु संस्कृतमनुसरति अतो यथा संस्कृतं राष्ट्रस्य गौरवमभिवर्धयति तथैव संस्कृतिरपि राष्ट्रं संवर्धयतीति सारवचः-

**संस्कृतं संस्कृतेर्मूलं ज्ञानविज्ञानवारिधिः।**
**वेदतत्त्वार्थसंजुष्टं लोकालोककरं शिवम्॥**

सम्प्रति भारते संस्कृतस्य सपर्यायै, समुन्नत्यै, सम्प्रेषणाय च सर्वकारस्य जनप्रतिनिधीनां मन्त्रिणां प्रधानमन्त्रिणाञ्च यादृशी अन्तश्चेतना अपेक्ष्यते तदर्थं सर्वथा मङ्गलमयोऽयं कालः। भारतीयचिन्तनस्य, भारतीयपरम्परायाः, भारतीयज्ञानविज्ञानस्य, भारतीयकलायाः, भारतीयसंस्काराणाम्, भारतीयजीवनमूल्यानाञ्च संस्थापनायै समर्पितमिदं शासनतन्त्रम्। वर्तमानलोकसभायाः नैके सदस्याः संसदसदसि संस्कृतभाषया प्रतिज्ञापनं विहितवन्तः। एतेन प्रसिद्ध्यति यन्न केवलं भाषण एवैतेषां संस्कृतं प्रति प्रेमप्रदर्शनमपितु व्यवहारेऽपि संस्कृतस्य प्रभावो भवत्विति तेषां दृढीयसी भावना। यद्यपि अस्माकं देशे विगतेभ्यः नैकवर्षेभ्यः प्रवर्तमानं संस्कृतस्य ह्रासमूलकं वृत्तान्तं मनसि महान्तं क्लेशं जनयति। प्राथमिकशिक्षासंस्थानेषु माध्यमिकविद्यालयेषु संस्कृतस्याध्ययनाध्यापनं नितान्तं न्यूनतां सम्प्राप्तं समाप्तप्रायं वा। आङ्ग्लभाषामाध्यमेन सञ्चालितेषु पब्लिकविद्यालयेषु पठिताः बालकाः बालिकाश्च न केवलं आङ्ग्लसंस्कृतिमनुकुर्वन्त्यपितु गौरवेणोररीकुर्वन्ति च। तेषां न संस्कृतं प्रति प्रेम, न वा संस्कृतस्य गौरवबोधः, अतः ते भारतीयां संस्कृतिमपि न विजानन्ति, संस्कृतेरज्ञानाद् भारतस्यापरिमितमतीतं गौरवमपि सर्वथा विस्मरन्ति। वस्तुतः संस्कृतस्य स्वजन्मभूमौ स्वसन्ततीभिरेतादृगनादरः उपहासः परिहासश्च परमार्थतोऽमङ्गलदायकः। अतः सर्वकारेण काचित्तादृशी नीतिर्निर्मीयेत्, तादृशं शैक्षिकं वातावरणं सम्पद्येद्यत्र प्रत्यक्षतः परोक्षतश्च संस्कृतस्यानिवार्यरूपेण समावेशः स्यात्, येन केन प्रकारेण यथाकथञ्चिद् व्याजेन वा प्राथमिककक्षासु संस्कृतस्य पठनमनिवार्यं भवेद्येन सुकुमारमतीनां बालकानां मनसि संस्कृतं प्रत्यनुरागभावः आदरबुद्धिश्च समुद्भवेत् तथा सति सुसंस्कृतैः नागरिकैरलङ्कृतमिदं राष्ट्रं नूनमेव पुनः पुरातनीं प्रतिष्ठां प्राप्स्यतीत्यत्र नास्ति संशयलेशः।

शोधप्रभायाः प्रकृतेऽस्मिन्नङ्के नैकविधविषयगाम्भीर्यमण्डिताः चतुर्दशशोधनिबन्धाः प्रकाश्यन्ते। प्रखरप्राञ्जलप्रतिभासम्पन्नैः नदीष्णैः सुधीभिः अनुसन्धानपद्धतिमाश्रित्य तत्तद्विषयेषु गवेषणापूर्वकं मौलिकमपूर्वञ्चान्वेषणमनुष्ठितम्। अनुसन्धानपथि प्रवृत्तानामाचार्याणामनुसन्धातॄणाञ्च प्रतिभाप्रगल्भेन शोधप्रभायाः 'प्रभा' सर्वत्र विलसत्विति कामयानोऽहं निकषधिषणापूरितविषयवस्तुजातस्य प्रकाममुद्बोधनाय सम्प्रार्थये सरस्वतीसपर्यापरान् सुमनसः मनीषिणः।

**डॉ. शिवशङ्करमिश्रः**
**विभागाध्यक्षः**
**शोधप्रकाशनविभागस्य**

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग



## English Section

ISSN - 0974-8946
अप्रैल-जून 2018

शोधप्रभा
वर्ष: 43, द्वितीयाङ्कः

# पाणिनीयव्याकरणे प्रस्थानान्तरसिद्धान्तानां समावेशः

**डॉ.रामसलाहीद्विवेदी***

सुविदितमेतत् यद्व्याकरणशास्त्रं सर्वशास्त्रोपकारकम्, यतः न हि व्याकरणमन्तरा कुत्रचिदपि अर्थेषु विज्ञता जायते, तदेव भाष्यकारोप्याह - **"निगदेनैव शब्द्यते"**[1] इत्यादि। तथैव व्याकरणशास्त्रस्यापि राद्धान्तसंस्थापनार्थं प्रस्थानान्तरीयतत्त्वानामाश्रयणं करणीयमेव भवति। अन्यथा सुष्फीतसिद्धान्तस्य प्रतिपत्यभावः स्यादेव। आचार्यो पाणिनिः नूनमेव अष्टाध्याय्यां क्वचित् क्वचित् स्वकीयव्यवहारेण सिद्धान्तमेनं समर्थयति। यथा - **"असूर्यललाटयोः दृशितपोः"**[2] इत्यस्मिन् सूत्रे प्रसिद्धमेकमुदाहरणं वर्तते असूर्यम्पश्या राजदारा इति। तत्र यद्यपि प्रक्रियाकारैः असमर्थसमासकल्पनायामस्य प्रमाणत्वेनोपन्यासः कृतः, तथापि अस्य आगमानुरोधेन आचार्यो भर्तृहरिः व्याख्यानं कुरुते यथा - चन्द्रमसः षोडशकलाः भवन्ति। तत्र या प्रथमा कला सा प्रतिपत्तिथौ एकांशेन सूर्यकलया आवृत्ता भवति। एवमेव द्वितीया तृतीया प्रभृतिषु सामान्यतया गतिर्जायते। एषा गतिः पञ्चदशीं कलां यावत् स्वकीयां सामर्थ्यं समेधयते। परन्तु पञ्चदश्यां सूर्येण समानावस्थां प्राप्ता एषा सूर्यकलाभिः नाच्छादिता भवति। यतो हि अमावस्येति पदस्य व्याख्यानमपि सुप्रसिद्धमेव अमा सह वर्तते चन्द्रार्कौ यस्यां सा अमावस्या इति। अत एव पाणिनिना **"अमावस्यदन्यतरस्याम्"**[3] इति व्युत्पत्या एषोऽर्थः समर्थितः। षोडशीं कलां यावत् सूर्यो न प्रविष्टिमुपैति, अत एव सा असूर्यम्पश्येति भवति। राजदारा इति पदेन सर्वागमैकसंवेद्या भगवती वाग्रूपा पराम्बैवावबुध्यते। तदेव श्रुतिरपि प्रमाणत्वेनोपन्यस्यते -

**न तत्र सूर्यो भाति न चन्द्रतारकं नेमा वेद्युतो भान्ति कुतोऽयमग्निः।**
**तमेव भान्तमनुभाति सर्वं तस्य भाषा सर्वमिदं विभाति॥**

वाक्यपदीये स्वोपज्ञकृतापि अस्य सिद्धान्तस्य आगमानुरोधेन एवं कृतम्। तथा च इमौ श्लोकौ निबद्ध्येते -

**सेयमाकीर्यमाणापि नित्यमागन्तुकैर्मलैः।**
**अन्त्या कलेव सोमस्य नात्यन्तमभिभूयते॥**

---

* सहाचार्यः, व्याकरणविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

1 महाभाष्यं पश्पशाह्निकम्

2 पा.सू. 3.2.36

3 पा.सू. 3.1.122

**तस्यां दृष्टस्वरूपायामधिकारो निवर्तते।**
**पुरुषे षोडशकले तामाहुरमृतां कलाम्॥**[1]

अत्र विषये वाचां भेदनिरूपणावसरे वैखर्याः मध्यमायाः पश्यन्त्याश्च स्वरूपप्रतिपत्तिचिकीर्षुः एतत्सर्वमाचार्य उदाजहार। तदेव परममनीषी आचार्यो रघुनाथशर्मा अनयोः विवरणमपि एवं कृतवान्[2]।

तत्र प्रस्थानान्तरीयविविधाः सिद्धान्ताः प्रतिपदं प्रविष्टाः परिलक्ष्यन्ते। न केवलं दर्शनसिद्धान्तेषु अपि तु प्रक्रियासिद्धान्तेष्वपि इमे सिद्धान्ताः अङ्गीकरणीयाः भवन्ति। यथा नागेशभट्टमते क्रियाजनकत्वं कारकत्वम् इति लक्षणम्। "**तत्र च दीयते कार्यं भववत्**"[3] इति सूत्रस्थभाष्यानुरोधेन सिद्धान्तितमेव। परन्तु अस्मिन् लक्षणे कर्मकारके भवति काचित् विप्रतिपत्तिः। यतः कारणस्य कार्योत्पत्तेः प्राक् सदवस्थानेनैव भवितव्यमिति हेतोः फलाश्रयस्य कर्मत्वात् फलस्य च उत्पत्स्यमानत्वात् कार्योत्पत्तेः प्राक् तदाश्रयस्य असम्भाव्यतया जनकत्वरूपकारकत्वमनुपपन्नमेव स्यात्। तदेव दर्शनान्तरं सिद्धान्तमुपादाय सः समाधिं ब्रूते। घटं करोति स्मरतीत्यादौ बौद्धघटादेः पूर्वकालत्वेन स्मृत्यादिनिष्पादकत्वं बोध्यम्। यद्यपि दीक्षितमतानुसारं क्रियान्वयित्वं कारकत्वम् इति मतेन न भवत्येषा समस्या तथापि भाष्यप्रामाण्यानुरोधेन अवश्यमेव लक्षणस्य अङ्गीकरणीयतया सांख्यनयमवलम्ब्य समाधिः करणीय इति मनुते। बौद्धार्थवादोऽपि दर्शनान्तरानुरोधेनैव समर्थनीयः। यतः योगसूत्रस्थलक्षणमुपादाय बौद्धार्थस्य सिद्धीक्रियते नागेशेन। तद्यथा "**शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः**" इति, अत्र णिनिप्रत्ययस्य ताच्छील्यार्थे विधानात्[4] स्वभावतः शब्दज्ञानानन्तरमनुपतनशीलः बाह्यार्थशून्यः विशेषबुद्ध्या परिकल्पनीयः बौद्धार्थः इति परिकल्पनीयो भवति। एतत्सर्वं स्वयमेव आचार्येण नागेशेन बहुधा समर्थितम्। बौद्धार्थोऽपि नागेशेन सत्ख्यातिवादमवलम्ब्य प्रतिष्ठाप्यते। यथा मञ्जूषायां निरूपितम्, तत्र हि भवन्ति बहुविधाः ख्यातयः यथा रामानुजीयानां मते यथार्थख्यातिः, शाङ्कराणां मते अनिर्वचनीया ख्यातिः, तार्किकमते अन्यथाख्यातिः, वैयाकरणानां मते सदसत्ख्यातिरित्यादि। तत्र वैयाकरणाः सदसत्ख्यातिं मन्वते, ते हि घटादिपदानां बुद्धिसत्ताविशिष्ट एव कश्चिदर्थो भवति इति स्वीकुर्वन्ति। अत एव न अग्निशब्दोच्चारणे दाहापत्तिः, न च असिशब्दोच्चारणे जिह्वोच्छेदापत्तिः। ते च वदन्ति यदि बुद्धिसत्ताविशिष्टोऽर्थः न स्यात् तदा घटोऽस्ति इति प्रयोगः न

---

1. वा.प. स्वोपज्ञवृत्तिः ब्रह्मकाण्डकारिका 144
2. षोडशकालः सोम इति सत्यम्, तथापि तस्य पञ्चदशैव कलाः प्रतिपदमारभ्य पूर्णिमापर्यन्तं दृश्यन्ते व्यवह्रयन्ते च। या तु तस्य षोडशी कला, सा तु सर्वथैव सर्वदैवादृश्याऽनपायिनी चेत्यनभिभाव्या सूर्येण कदापि कथमपीति पश्चदश्या एववमावास्यायामत्यन्तमनभिभाव्यता, सूर्ये प्रविलयाच्च कथञ्चिदभिभाव्यताऽप्यभिप्रेता। एवं पुरुषोऽपि षोडशकलः, तस्यान्त्या कला पश्यन्ती वाग्रूपा। पश्यन्ती तु परापरभेदेन द्विविधा। तत्र यत्तस्या अपरं रूपं तदपभ्रंशैराकीर्यमाणमपि नात्यन्तमभिभूयते। अविद्यया त्वभिभूयमानत्वेन कल्प्यत इत्येतदवबोधयितुमत्यन्तपदमुपात्ततम्। अत्रापि पश्यन्त्या अपभ्रंशैः सङ्कीर्णत्वभ्रमरूप एकीभाव एव तस्या अत्यन्तमनभिभवे हेतुरिति। (प.रघुनाथशर्मा, वा.प. ब्रह्मकाण्डकारिका 144)
3. पा.सू. 5.1.96
4. सुप्यजातौ णिनिस्ताच्छील्ये पा.सू.

स्यात् यतः घटः इति कथनेनैव बाह्यार्थसत्ताविशिष्टस्य घटस्य बोधात् किमर्थं तत्स्थापनार्थमस्तीति प्रयोगस्य अपेक्षा स्यात्। न हि सिद्धार्थमुपादाय किमपि विधानमुपयुज्यते "उक्तार्थानामप्रयोगः" इति सिद्धान्तस्योद्भूतत्वात्। एवमेव घटो नास्ति इति प्रयोगोऽपि न स्यात्। यतः बाह्यसत्ताविशिष्टे घटे सति तदभावस्यासत्त्वात् तद्वति तदभावबुद्धेः प्रतिबन्धकत्वात् तादृशवाक्यस्यासम्भवात्। बौद्धार्थाङ्गीकारे तु घटपदबोध्यार्थस्य बुद्धौ अवभाषणात् बाह्यसत्तायाः अभिप्रायेण अस्तीत्यादिप्रयोगस्य उपयुक्तत्वात्। एवमेव घटो नास्ति इत्यत्रापि सत्यामपि बाह्यसत्तायां मानसमभावमुपादाय नास्तीति प्रयोगः कर्तुं युज्यते। तदेव बौद्धार्थः अङ्गीकरणीयः इति। अयमेव पदार्थः वस्तुशून्यो विकल्पः इति। किञ्च शशशृङ्गं नास्ति, अङ्कुरो जायते इत्यादिवाक्यान्यपि बौद्धार्थाङ्गीकारे एव उपपद्यन्ते। यतः बुद्धिस्थस्यार्थस्य अभावबोधनं सङ्गच्छत एव, परन्तु बाह्यस्य शशशृङ्गस्याभावेन सुतरां सिद्धतया पुनः तत्सत्तायाः अभावबोधनस्य नैष्फल्यं स्यात्। एवमेव उत्पद्यमानस्य अङ्कुरस्य बाह्योत्पत्तेरभावेन अङ्कुरजनिकर्तृकबोधो न स्यात्। बुद्धिसत्तायान्तु शुद्धार्थस्य पूर्वभावित्वेन तथाविधं कर्तुत्वं सम्भवि एव। अत एव -

**एष वन्ध्या सुतो याति खपुष्पकृतशेखरः।**
**कूमक्षीरचयो स्नाति शशशृङ्गधनुर्धरः॥**

इत्यादिवाक्यमपि सङ्गच्छते, अन्यथा अर्थवत्वाभावात् प्रातिपदिकत्वाभावेन विभक्तिरदर्शनं स्यादेव। किञ्च व्यपगतानां राज्ञां अर्थबोधकपदानां निर्वाहायापि बौद्धार्थः अवश्यमङ्गीकरणीयः। अत एव रावणादिपदात् विभक्तिरुत्पद्यते। अन्यथा साम्प्रतं तेषां अभावात्, अनुगतावयवसंस्थानव्यङ्ग्यायाः जातेः इदानिं सर्वथा असत्वात् तदवच्छिन्ने शक्तिग्रहे दुरुपपादत्वे सति तथाविधः शाब्दबोधो न स्यात्, तदवच्छिन्ने शक्तेरभावात्। बौद्धार्थाङ्गीकारे तु एतत्सर्वमञ्जसैव समाहितं भवति।

किञ्च समानाधिकरणविषयोरेव कार्यकारणभाव इति सुस्पष्टः सिद्धान्तः। तथा च इच्छायाः बुद्धिनिष्ठत्वात् विषयस्यापि बुद्धिनिष्ठत्वात् समानाधिकरणेन अर्थस्य बुद्धिविषयता सिद्ध्यति। अन्यथा तत्र दोषः स्यादेव, अतो हेतोरपि बौद्धार्थः अङ्गीकरणीयः। तदेव इच्छां प्रति विषयस्य कारणता सिद्ध्यति। अयञ्च सिद्धान्तः न केवलं नागेशस्य अपूर्वः सिद्धान्तः अपि तु न्यायसूत्रकारस्य महर्षे गौतमस्यापि परमादृतः "**तैः उत्पादव्ययदर्शनात्**" इत्यस्मिन् असत्कार्यवादस्य व्याख्यानं विधाय उत्पत्तेः प्राक् असतः कार्यस्य जनिकर्तृत्वं कथमित्याशङ्क्य समाहितम्। तत्रोक्तञ्च बुद्धिसिद्धन्तु तदसदित्यादि, तु शब्दः अप्यर्थकः तेन उत्पत्तेः पूर्वं नाशादनन्तरमसदपि वस्तु बुद्धिविषयतया सिद्धं भवति। एतेन स्पष्टं यदत्र व्याकरणे न्यायदर्शनस्य कतिपयसिद्धान्तप्रतिपादनसम्मतिरुपलब्धेति।

वाचस्पतिमिश्राः अपि सिद्धान्तमेनं समर्थयन्ति, तत्र हि उक्तं तैः "चेतनो हि नामरूपे बुद्धौ आलिख्य घट इति नाम्ना कम्बुग्रीवादिना रूपेण च बाह्यं घटं निष्पादयति" इत्यादि। अत्र निर्वर्तस्यापि घटस्य अन्तःकरणसंकल्पसिद्ध्या कर्मकारकत्वं सूपपन्नम्। तेन घटं करोतीति प्रयोगः उपपद्यते। तथा च भामत्यामुक्तं तैः बुद्धिसिद्धन्तु तदसदिति। एवमेव इदं रजतमिति भ्रमस्थलेऽपि बौद्धं रजतमेव गृहीतं भवति। यतः अन्तःकरणस्य वृत्तिः अवश्यमेव इन्द्रियप्रणाल्याः बहिर्गच्छति, सा च वृत्तिः अवयवद्रव्यरूपा

रजतसंस्कारेण युक्ता भवति। पुनश्च पूर्ववर्तिनि पदार्थे सम्बन्धमुपस्थाप्य तद्गतार्थेषु संकेतविधिना चाकचिक्यवशाच्च रजतसंस्कारोद्बोधे रजतसम्बन्धाभावेऽपि पूर्ववर्तिनि विषये संसर्गमुखेन तदाकारतया परिणामः लभते इति। एवञ्च सा वृत्तिः रजताकाररूपा जाता, इयमेव अन्तःकरणस्य वृत्तिः भ्रम इत्युच्यते। भ्रमत्वं तु उत्तरकाले बाधादेव सिद्ध्यति, तदेव भ्रमत्वज्ञापकत्वमेव बाधकत्वं भवति। चित्तवृत्तेः परिणामस्य बहिरसतः रजतस्य बौद्धार्थमुपादायैव कर्तुं शक्यते। यद्यपि अत्र विषये नैयायिकाः आपणस्थं रजतं पूर्वानुभूतं तस्य संस्कारमादाय इदानीमपि तत्संस्कारद्वारा पूर्ववर्तिनि अरजते वस्तुनि आरोपात् भ्रमस्य सिद्धिं परिकल्पयन्ति। परन्तु तेषां मतं न समीचीनम्, यतः इदं रजतमिति प्रत्यक्षं ज्ञानं तेषामिन्द्रियार्थसन्निकर्षाभावात् न सम्भवति। अतः रजतसंस्काराख्यायाः चित्तवृत्तेः रजताकारेण परिणाम एवावगन्तव्यः। बहिर्नास्ति अतः असदित्युच्यते, बुद्धौ प्रतिभाति अतः सदित्युच्यते। तेन सदसत्ख्यातिरिति नागेशमते सिद्ध्यति। अत्र स्पष्टमेव यन्मतान्तरसहयोगमन्तरा न ह्यस्य सिद्धान्तस्य मनागपि प्रतिपादनं कर्तुं शक्यते।

महाभाष्यकारोऽपि असतः भ्रमेः मानमङ्गीकरोति। "**स्त्रियाम्**"[1] इति सूत्रे उक्तवान् सः "कथं पुनरसलिङ्गं द्रष्टुं शक्यम्? मृगतृष्णावत्। तद्यथा मृगाः तृषिताः अपां धाराः पश्यन्ति। न च ताः सन्ति। यथा गन्धर्वनगराणि दूरतो दृश्यन्ते, उपसृत्य च नोपलभ्यन्ते"[2] इति। एतेन स्पष्टमेव भवति यदस्ति बौद्धार्थः, अन्यथा कस्मिंश्चिदपि काले कस्यापि पुरुषस्य एवम्भूतेषु असत्स्वर्थेषु कथमपि प्रवृत्तिर्न स्यात्। अनेनैव सिद्धान्तेन आचार्यो भर्तृहरिरपि इमां कारिकामुपबबन्ध -

**यथा सलिलनिर्भासः मृगतृष्णासु जायते।**
**जलोपलब्ध्यनुगुणात् बीजाद्बुद्धिर्जलेऽसति।।**

अत्र कारिकायां बीजशब्दस्य व्याख्यानं पूर्वपूर्वमिथ्याज्ञानजन्य वासनारूपेण कृतवन्तः प्रतिष्ठिताः आचार्याः। सांख्यसूत्रेषु तु स्पष्टमेव अस्याः ख्यातेः निर्वचनं प्राप्यते। तथा च सूत्रम् - "**सदसत्ख्यातिर्बाधाबाधाभ्याम्**" इति, अस्य विवरणमपि एवं कर्तुं शक्यते। यद्विशेषदर्शनं यद्भवति तद्बाधात् पूर्वमेव, तदपि आरोपेणैव कर्तुं शक्यते। स च आरोपः बुद्धौ, अतः बौद्धार्थः इति अवगन्तव्यः। परमार्थसारेऽपि आचार्येण शेषनागेन इदं श्लोकमुपनिबद्धम् -

**मृगतृष्णायामुदकं शुक्तौ रजतं भुजङ्गमो रज्ज्वाम्।**
**तैमिरिकचन्द्रयुगवत् भ्रान्तमखिलं जगद्रूपम्।।**

अत्र भ्रान्तमित्यनेन भ्रमविषयः इत्यवगन्तव्यः। व्यासाचार्याणां मते तु मायामात्रमेव स्वप्नप्रपञ्चवन्मिथ्यैव प्रतिकल्प्यते, तथापि यावद्ब्रह्मसाक्षात्कारो न क्रियते तावत् सर्वविधप्रपञ्चोऽपि व्यवस्थित एव। स्वप्नादौ यत्प्रतिबुध्यति तत्सर्वं बाधितमेव भवति। अत एव असदर्थस्य प्रकाशनं मायायाः परमं कर्तव्यम्, उक्तञ्च श्रीमद्भागवते -

1. पा.सू. 4.1.3
2. महाभाष्यम् 4.1.3

**ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि।**
**तद्विद्यादात्मनो मायां यथाऽऽभासो यथा तमः।।**

अनेनापि स्पष्टं भवति यद्वैयाकरणसम्मतसिद्धान्तप्रतिपादनेष्वपि प्रस्थानान्तरीयसिद्धान्तानां साहाय्यमपेक्षत एव। एवमेव शब्दादस्य जगतः उत्पत्तिरिति सिद्धान्तोऽपि वैयाकरणानां राद्धान्तभूतः, तस्य प्रतिपादनमपि दर्शनान्तरसहायमन्तरा न सम्भवति। यतः वाक्यपदीयस्य प्रथमकारिकायाः[1] व्याख्यानावसरे प्रक्रिया जगतो यतः इत्यत्र साधनमाह विवर्तते इति। तत्र विवर्तस्य बहूनि लक्षणानि उपलभ्यन्ते। एकं तु "अतत्त्वतोऽन्यथा प्रथा विवर्तः" इति वेदान्तादिषु ग्रन्थेषु सुप्रसिद्धमेव। अस्यैव सारमादाय हेलाराजोऽपि विवर्तस्य लक्षणमेवं कृतवान् – "एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणा- सत्यविभक्तान्यरूपोपग्राहिता विवर्तः"[2] इति। विवर्तस्य विस्तारस्तु मूर्तक्रियारूपेण पृथक्प्रकल्पितः इति तु अन्यदेतत्। परन्तु अत्रापि वेदान्तनयस्य बहुधा प्रभावः उपलक्ष्यते, यतो हि यथा सर्वत्र तत्र सिद्धान्ते विवर्तादिषु मायायाः एव कारणत्वमुपपाद्यते। सा च माया अविद्यापदवाच्या भवति, तथैव अत्रापि सर्वत्र अविद्यायाः एव कर्म इति आसादितम्। उक्तञ्च तत्र सोपज्ञवृत्तौ **"एतद्धि अविद्यायाः अविद्यात्वम्"**[3] इति। अत एव विद्यायाः स्वरूपे अवस्थितं शब्दब्रह्म संवर्तावस्थायां वस्तुसद्भवति, विवर्तावस्थायां तु तदेव ब्रह्म बहुधा परिलक्ष्यते। उक्तञ्च तत्र ग्रन्थे –

**यः सर्वपरिकल्पानामाभासेऽप्यनवस्थितः।**
**तर्कागमानुमानेन बहुधा परिकल्पितः।।**

तदेवास्य सिद्धान्ततया प्रतिपादनमेवं कल्पयितुं शक्यते। यत्सर्वविकाराणां यदा प्रलयो भवति तदा वर्णमात्रापदमन्यच्च यावदानुपूर्वीरूपं तत्सर्वमुपसंहृतं भवति तदेव संवर्तावस्था इति जायते अन्यत्र तु विवर्तावस्थायां प्रपञ्चः उद्भूत एव। अत्र विवर्तपदेन प्रमुखतः किं किं भवति एतत्सर्वं दर्शनान्तरसन्निधानेनैव उपपादयितुं शक्यते। अत्र स्वोपज्ञवृत्तौ एतत्सर्वं निरूपितम्। तथा चेमे श्लोकाः –

**त्रयीरूपेण तज्ज्योतिः परमं परिवर्तते।**
**पृथक्तीर्थप्रवादेषु दृष्टिभेदनिबन्धनम्।।**

**शान्तविद्यात्मको योऽशस्तदुहैतदविद्यया।**
**तया ग्रस्तमिवाजस्त्रं या निर्वक्तुं न शक्यते।।**

**सर्वतः परिवर्तानां परिमाणं न विद्यते।**
**तस्या या लब्धसंस्कारा न स्वात्मन्यवतिष्ठते।।**

---

1. अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।। –वा.प.ब्रह्मकाण्डकारिका
2. हेलाराजः, ब्रह्मकाण्डकारिका 1
3. स्वोपज्ञवृत्तिः ब्रह्मकाण्डकारिका 1

**यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः।**
**सङ्कीर्णमिव मात्राभिश्चित्राभिरभिमन्यते॥**

**तथेदममृतं ब्रह्म निर्विकारमविद्यया।**
**कलुषत्वमिवापन्नं भेदरूपं विवर्तते॥**

**ब्रह्मेदं शब्दनिर्माणं शब्दशक्तिनिबन्धनम्।**
**विवृत्तं शब्दमात्राभ्यस्तास्वैव प्रविलीयते॥**[1]

अत्र हि सृष्ट्युत्पत्तिविषये औपनिषदः सिद्धान्तः समर्थितः, यतः "**तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी**" इत्यादि मन्त्रे येन प्रकारेण सृष्टिप्रक्रियायाः वर्णनं तदेवात्रापि आसादितम्। किञ्च शब्दतत्त्वस्य जीवरूपता अपि प्रस्थानान्तरसहयोगेनैव उपपादयितुं शक्यते, तथा च भागवते एकादशस्कन्धे अयं श्लोकः स्पष्टः प्रतिभाति -

**स एव जीवः विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टः।**
**मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरा वर्ण इति स्थविष्टः॥**[2]

अस्य व्याख्यानमपि स्पष्टमेव, यतो हि हृदयशिरःकण्ठमूर्धरूपेषु प्रविष्टः शब्दः सूक्ष्मं रूपं त्यक्त्वा अन्तःकरणविकारान् प्राप्य मात्रारूपेण, स्वररूपेण, वर्णरूपेण च प्रसिद्धिं प्राप्तः, अयमेव शब्दः अन्तःकरणेष्ववस्थानात् जीवरूपेण प्रकल्पितः। एवमेव अत्रापि नये त्रिविधं चैतन्यं भवति प्रमातृप्रमाणविषयचैतन्यभेदेन। अन्तःकरणावच्छिन्नचैतन्यं प्रमातृचैतन्यं तस्यैव साक्षिचेतनस्य विवृत्तिः शब्दार्थरूपेण संसारदशायामवलोक्यते। एतेषां परस्परमभ्यासादेव संसारदशा सिद्ध्यति।

भट्टनागेशेनापि मञ्जूषायां वाच्यवाचकभावापरपर्याया शक्तिरिति पदस्य विवेचनावसरे स्वकीयं मतमखण्डशक्तिवादितया उपपादितम्। तत्रापि वाच्यवाचकभावः जन्यजलत्ववदेव व्याख्यातुं शक्यते। यथा जन्येति विशेषणं न जलत्वे दातुं शक्यते तस्य बाधादतः जन्यं यज्जलं तद्गता जातिः अखण्डैव भवति तथैव वाच्यवाचकभावोऽपि अखण्ड एव भवति इत्यनेन दृष्टान्तेनापि प्रस्थानान्तरसहयोगः अङ्गीकृतः।

वाचां कथमाविर्भावः इति सिद्धान्तोपपादनावसरे "**वायोरणूनां ज्ञानस्य शब्दत्वापत्तिरिष्यते**" इत्युक्त्वा अनेकेषां सिद्धान्तानां समर्थनं कृतम्। तत्र वायोः शब्दत्वापत्तिरित्येषः सिद्धान्तः शिक्षाकृता स्वीकृतः। परन्तु अत्र विशिष्टं सिद्धान्तमुद्भावयामास भाष्यकारः, यतः सः "**आख्यातोपयोगे**" इति सूत्रस्य व्याख्यायां बौद्धिकमपादानमङ्गीकृत्य आचार्यस्य ज्ञानमेव शब्दरूपेण परिणमितो भवति इत्युक्तवान्।

---

1. स्वोपज्ञवृत्तौ ब्रह्मकाण्डकारिका 1
2. भा.पु. 11.12.17

परन्तु बहुशः तर्कसमीक्षणेन शब्दोच्चारणप्रक्रियायाः साम्यमेव स्थापितम्। अत एव "**आत्मा बुद्ध्या समेत्यर्थान् मनो युङ्क्ते विवक्षया**"[1] इत्यस्याः कारिकायाः व्याख्यावसरे शेखकरकारः "आत्मा अन्तःकरणं संस्काररूपेण स्वगतानर्थान् बुद्ध्या स्ववृत्त्या समेत्य एकबुद्धिविषयान् कृत्वा तद्बोधनेच्छया मनो युक्तं करोति, तदिच्छावन्मनः कायाग्निं जाठरमग्निमभिहन्ति, स कायाग्निः, सोदीर्णः स मारुतः उदीर्णः ऊर्ध्वं प्रेरित इत्यादिस्तदर्थः"[2] इति। अत्रापि दर्शनान्तरप्रभावः परिलक्ष्यते।

एवमेव सर्वत्र प्रक्रियादर्शनपरिस्कारादिसिद्धान्तानामुपपादने मीमासाप्रभृतिषु मुख्येषु ग्रन्थेषु ये ये नियमाः वर्तन्ते तेषामनुपालनं वैयाकरणचणैरपि सहर्षं कृतम्। स्वयमेव अर्थनिर्धारणव्यवस्थायाः उपपादनं प्रसिद्धसाधनैरेव आश्रितम्। तथा चाह कारिकाम् -

**सतोऽविवक्षा पारार्थ्यं व्यक्तिरर्थस्य लैङ्गिकी।**
**इति न्यायो बहुविधस्तर्केण प्रविभज्यते॥**[3]

इत्यादि। यथा ग्रहं सम्मार्ष्टि, स्त्रियं ये चोपजीवन्ति प्राप्तास्ते मृतलक्षणम् इत्यत्र अविवक्षा प्रस्तूयते तथैव "**कर्तुरीप्सिततमं कर्म**", "**तस्यापत्यम्**" इत्यत्रापि काललिङ्गयोः अविवक्षा साध्यते। अत एव लक्षणव्यवस्थापनं तर्काधीनम्, एवमेव नक्षत्रं दृष्ट्वा वाचं विसृजेदित्यत्र यथा नक्षत्रपदं कालस्योपलक्षणं तथैव "**अट्कुप्वाङ्नुम्व्यवायेऽपि**" नुम्ग्रहणमनुस्वारस्योपलक्षणमित्यादिस्पष्टतया अङ्गीकृतमेव। नागेशग्रन्थेषु शाक्तदर्शनानां बहुधा प्रभावः उपलभ्यत एव। युक्तं चैतत् यतोऽपि सद्वस्तु प्राप्यते तस्य सङ्कलनं करणीयमेव, तत एव प्रतिभाविकासः प्राप्यते। उक्तञ्च वाक्यपदीये -

**प्रज्ञाविवेकं लभते भिन्नैरागमदर्शनैः।**
**कियद्वा शक्यमुन्नेतुं स्वतर्कमनुधावता॥**

इत्यादि। तदेव परस्परसद्भावविचारणेन सिद्धान्तानां साधुज्ञानं जायते, सत्यमेवाह भगवान् पतञ्जलिः "**सर्ववेदपारिषदं हि व्याकरणम्**" इति।

---

1. पाणिनिशिक्षा 6
2. लघुशब्देन्दुशेखरः संज्ञाप्रकरणम्, तुल्यास्यप्रयत्नं सवर्णम्
3. ब्रह्मकाण्डकारिका 136

ISSN - 0974-8946 **शोधप्रभा**
**अप्रैल-जून 2018** वर्षः 43, द्वितीयाङ्कः

# समास-वृत्तिविचारः

**डॉ. रामबदनपाण्डेयः***

वृत्तिविषये बहुषु स्थलेषु व्याकरणादिग्रन्थेषु बुधैः विचारितम्। तत्र ''समर्थः पदविधिः''[1] इति सूत्रस्थभाष्यरीत्या किञ्चिद् विचार्यते। तत्र भाष्ये ''तत्रेदमपरं द्वैतं भवति'' एकार्थीभावो वा सामर्थ्यं स्यात् व्यपेक्षा वा। इतः पूर्व परिभाषापक्षः अधिकारपक्षश्चोपन्यस्तौ, अनेकार्थस्यैकार्थत्वमेकार्थीभाव इति शब्दशक्तिमनुसृत्य जहत्स्वार्थाजहत्स्वार्थयोस्तत्वं दर्शयिष्यन्नजहत्स्वार्थायां सामर्थ्यमुपपादयति । ''यत्र पदान्युपसर्जनीभूतस्वार्थानि निवृत्तस्वार्थानि वा प्रधानार्थोपादानाद् व्यर्थानि, अर्थान्तराभिधायीनि वा पदानि स एकार्थीभावः''। उपसर्जनभूतस्वार्थानि-इतरविशेषणभूतस्वार्थोपस्थाकानीत्यर्थः, न तु पृथक् स्वार्थोपस्थापकानीति तात्पर्यम्। एवं च तत्पुरुषादावेकं पदं तादृशम्। बहुब्रीहौ द्वन्द्वे च पदद्वयमपीति बोध्यम्। जहत्स्वार्थायामाह-निवृत्तिस्वार्थानि वेति। उभयत्रापि हेतुः प्रधानार्थोपादानादिति आदौ प्रधानार्थेन स्वोपस्थितिकाल एवोपसर्जनपदार्थस्य विशेषणतयोपादानादित्यर्थः। अन्त्ये प्रधानेन पदेन तदर्थस्याप्युपादानादित्यर्थः। बहुब्रीहौ तु प्रधानं पदं समुदाय इति बोध्यम्। एवं द्वन्द्वेऽपि प्रधानं पदं समुदायस्तदर्थेन साहित्येन स्वविशेषणतया धात्वार्थस्योपादानादुपसर्जनभूतस्वार्थानि। यद्वा विशेष्यसाहित्योपस्थापकतया प्रधानेन समुदायेनैव धवाद्यर्थस्योपादानान्निवृत्तस्वार्थानि वेति, तत्राप्येकार्थीभावः।

समाहारेतरेतरयोरुभयोरपि साहित्यं विशेष्यम्। आद्येऽनुद्भूतावयवभेदमन्त्ये उद्भूतावयवभेदमित्येव तयोर्भेद इति बोध्यम्। व्यर्थानीति पदं सन्निहितत्वान्निवृत्तस्वार्थानीत्येतत्पक्षान्वयि। आद्ये आह-अर्थान्तरेति, अर्थान्तरान्वितस्वार्थाभिधायिनीत्यर्थः। प्रत्येकशक्तिसहकृत समुदायशक्त्या विशिष्टार्थप्रातिपादकानीति भावः। पदानीति बहुवचने तु बहुब्रीह्यभिप्रायेण। स एकार्थीभाव इति। आद्ये एकीभूतार्थानि मिलितार्थानीत्यर्थः। तत्र मिलितस्येतरसाकाङ्क्षात्वाद् द्वयोरपि समर्थत्वं तत्पुरुषादौ। अन्त्ये पदद्वयार्थयोरेकपदार्थत्वप्राप्तिरित्यर्थः। परस्परेति विशब्दस्य क्रियाव्यतिहारवृत्तित्वादिति भावः। तत्रैवैकार्थीभावस्येतितदुक्तत्रयाणां मध्ये तत्रैवेत्यर्थः। व्यपेक्षासहिताधिकारत्वेऽधिकारत्वप्रयुक्त दोषमाह-भाष्येऽन्यत्र खल्वपीति।

अत्र हि एकार्थीभावः सामर्थ्यमधिकार इत्येकः पक्षः। व्यपेक्षा सामर्थ्यमधिकार इति द्वितीयः पक्षः। द्विविधं सामर्थ्यमधिकार इति तृतीयः। एवं परिभाषायामपि त्रयः पक्षा इति षट्पक्षीसम्भवे एकार्थीभावः परिभाषा चेति निर्णयः। अत एव भाष्ये उक्तम् 'तत्रैकार्थीभावः सामर्थ्यं परिभाषा चेत्येवं

---

* प्राचार्यः (प्रभारी) श्रीएकरसानन्दआदर्शसंस्कृतमहाविद्यालयः, मैनपुरी उ.प्र.

1 पा.सू. 2.1.1

सूत्रमभिन्नतरं भवति। अत्र सूत्रे 'अथ क्रियमाणऽपि समर्थग्रहणे समर्थमित्युच्यते किं समर्थं नाम' इत्युपोद्घाते। पृथगर्थानामेकार्थीभावः समर्थवचनमिति वार्तिककृतेऽवतारिते राज्ञःपुरुषः राजपुरुष इत्यनयोः को विशेष इति प्रश्ने सुब्लोपो भवति। राज्ञः पुरुष इत्यत्र व्यवधानम्-राज्ञ ऋद्धस्य पुरुष इति। यथेष्टमन्यतरेषामिति सम्बन्धो भवति वाक्ये , राज्ञः पुरुषः पुरुषो राज्ञ इति द्वौ स्वरौ राज्ञः पुरुषः। समासे पुनरेक एव, राजपुरुष इति। नैते एकार्थीभावकृता विशेषाः। आह हि भगवान् ''सुपो धातुप्रातिपदिकयोः''[1] ''उपसर्जनं पूर्वम्''[2] समासस्यान्त उदात्तो भवतीति। इमे तर्हि एकार्थीकृता विशेषाः। संख्याविशेषो भवति वाक्ये राज्ञः पुरुषः राज्ञोः पुरुषः, राज्ञां पुरुषः इति समासेन भवति राजपुरुष इति। अथ ये वृत्तिम् एकार्थीभावरूपां शास्त्रेण निष्पादयन्ति। अर्थात् एकार्थीभावकृता विशेषाः समर्थसूत्रविधेयाः। सुबन्तेन सुबन्तं सामर्थ्यवद् भवतीति। समर्थ च समसंज्ञकः भवति। एवं च विभाषाधिकारोऽपि सर्वं चरितार्थं भवति। समासादौ किं त आहुः? परार्थाभिधानं वृत्तिरित्याहुः। अथ तेषामेवं ब्रुवतां किं जहत्स्वार्थावृत्तिर्भवति आहोस्विदहजत्स्वार्था? अनया रीत्या द्वयोः वृत्योः का पुनर्वृत्तिर्न्याय्या इति प्रश्नो जहत्स्वार्थायां दोषगुणौ निर्दिष्टौ।

अथवा समर्थाधिकारोऽयं वृत्तौ क्रियते, तत्र यदि भेदसंसर्गौ न स्यातां तदा सामर्थ्यमेव न स्यात्, तथा च भेदः सर्गाविनाभावित्वादनुमीयमानसंसर्गः सामर्थ्यम्। संसर्गो वा भेदाविनाभाव्यनुमेयभेदः, उभौ वा यौगपद्येनाश्रीयमाणो सामर्थ्यमित्यर्थः एवं च राज्ञः पुरुष इति विग्रहवाक्यस्याप्यस्याभिधाने यः यः शक्तः स समर्थो वेदितव्यः। यथा राजपुरुष इत्ययं समासः। ततोऽपि तदर्थस्य प्रतीतिः। स पुनरर्थः संसर्गः भेदश्च, भेदसंसर्गौ वा । तत्र स्वविशेषस्य स्वामिविशेषेण, स्वामिविशेषस्य च स्वविशेषेण यः सम्बन्धः स संसर्ग आख्यायते। स्वान्तस्य स्वाम्यन्तरेभ्यः, स्वाम्यन्तरस्य स्वान्तरेभ्यश्च व्यावृत्तिर्भेद आख्यायते। तत्र संसर्गवादिनां मते संसर्ग एव शब्दार्थो व्यावृत्तिस्त्वर्थसंगृहीता। नहि अव्यावर्त्यमानयोः स्वस्वामिनोः सम्बन्ध्यन्तरेभ्यः संसर्ग उपपद्यते। भेदवादिनस्तु व्यावृत्तिरेव शब्दार्थः। संसर्गोऽर्थगृहीतः। नहि व्यावर्त्यमानस्य सम्बन्ध्यन्तरेण सम्बद्धस्य स्वाम्यादेरवस्थानमस्ति। उभयवादिनस्तु उभय एव शब्दार्थः।

**नागेशमतम्** - लघुमञ्जूषाया[3] तु यद्यपि भेदः संसर्गो भेदसंसर्गौ वा सामर्थ्यम् इति भाष्य उक्तम्। तथापि वृत्तौ सामर्थ्यस्य लक्षणात्रये भेदवदर्थोपस्थापकत्वं संसर्गवदर्थोपस्थापकत्वम् उभयवदर्थोपस्थापकत्वं वेति । भेदादित्यादाववधारणम् आद्ययोर्बीजम्। भेदसंसर्गयोः समनैयत्याद् विनिगमनाविरहस्तृतीयो बीजम्।

को भेदः संसर्गो वा इत्युपक्रम्य भाष्य उक्तम्- वाक्ये प्रसक्तं सर्वस्वन्निर्दिश्यते, राज्ञः पुरुषोऽश्वश्चेत्यादि। तथा प्रसक्तः सर्वः स्वामी पुरुषं स्वाम्यन्तरान्निवर्तयति। एवमुभयस्मिन् परस्परेण

1 पा.सू. 2.4.71

2 पा.सू. 2.2.30

3 लघुमञ्जूषायाम्, पृ.सं. 1404

व्यवच्छिन्ने यदि स्वार्थं जहाति राजपदं तदा कामं जहातु इति स्वाम्यन्तरादित्युक्त्या राजरूपस्वामिनोऽनिवृत्तिलाभेन तत्संसर्ग उक्तः। अनेन च तयोस्तद्रूपेण बोधाविषयत्वमुक्तम्। बोधविषयत्वे राजपदार्थस्य भेदसंसर्गस्य प्रतियोगितयान्वयावश्यक्त्वे न त्यागकथनासङ्गतिः। अर्थस्य बोधविषयत्वमेव हि त्यागस्तस्मादुक्त एवार्थो भाष्यसम्मतः।

**कौण्डभट्टमतम्-** अत्र हि भूषणकारो यद्यप्यत्र महाभाष्ये नाना पक्षा निरूपितास्थाप्यत्रैव विश्रान्तिस्तेषामिति विभाव्यते।

**कैयटो हरदत्तश्च यां व्यवस्थां प्रचक्रतुः।**
**सा न्यायभाष्यानुगुणा नेत्युपेक्ष्येति विद्महे॥**

संरूपिता इति भाति, तथापि तद्विवेके सति जहत्स्वार्थाजहत्स्वार्थपक्षयोरेव पर्यवसानं लभ्यते। तद्यथा इदं तावद् भाष्ये पक्षसृष्टिः प्रतीयते समासादावेकार्थीभावो विग्रहे च व्यपेक्षेत्येकः पक्षः। अथ ये वृत्तिं वर्तयन्ति इत्यारभ्य जहत्स्वार्थाऽजहत्स्वार्था चेति पक्षभेदेन मतान्तरं समासादावपि वाक्यवद्व्यपेक्षैव सामर्थ्यमिति चापरं मतम् इति।

**कैयटमतम्-** तत्रेत्थं कैयटेन निर्णीतम् - नित्यशाब्दवादिमते राजपुरुषादीनि वाक्यविषयपदसरूपावयवानि वर्णवदनर्थकोपलभ्यमानावयवानि तद्वतो निरवयवान्येव केवलमसत्यप्रक्रियाश्रयेणान्वाख्यायन्ते। अतस्तत्र जहदजहत्पक्षावतारः। अतस्तत्रैकार्थीभाव एव। वाक्ये तु व्यपेक्षा, परस्पराकाङ्क्षा च व्यपेक्षेति प्रथमो पक्षः। कार्यशक्तिकानां वाक्याद् विकल्पः। ''अथ ये वृत्तिं वर्तयन्ति किं त आहुः'' इत्यादिना भाष्ये तथैव स्पष्टत्वात्। तत्र जहत्स्वार्था नाम राज्ञो विशेषणान्वयसहिष्णुतारूपप्राधान्यत्याग एव। तद्यथा तक्षा राजकर्मणि वर्त्तमानः स्वं तक्षकर्म जहाति, 'हिक्कितहसिते' इत्यादिना दृष्टान्तेन तथैव भाष्ये व्युत्पादितत्वात्। एकार्थीभावस्त्वत्र पक्षे राजपदेन राजपुरुषयोरुपादानसिद्ध्यर्थमङ्गीक्रियते। तदनभ्युपगमे राज्ञि विशेषणान्वयापत्तेः। अजहत्स्वार्था च राजांशस्यापरित्यागमात्रात्। 'भिक्षुकोऽयं द्वितीयां भिक्षां लब्ध्वा पूर्वां न जहाति, सत्राय प्रवर्तते' इत्यादि भाष्येण तथैव लाभात्। अथवा पुरुषव्यावर्तकत्वमात्रेण राजांशस्योपयोगाद् राजपदं स्वार्थं जहात्येव । न चैतावता तन्निमित्तं विशेषदर्शनं निवर्तते पुरुषे नह्यग्निसम्बन्धजनित-तापरूपादिनिवृत्तिर्घटेऽग्निसंयोगे निवृत्ते भवति। अथवान्वयाद् विशेषणं भवति 'घृतघटश्चभ्यकपुट' इत्यादिना भाष्ये तथैव स्पष्टत्वात्। तस्माद् वृत्तिनिष्पत्तिवादिमते जहत्स्वार्थाजहत्स्वार्थान्तर्भाविण पक्षद्वयं स्थितम्। व्यपेक्षावादस्तु स्वतन्त्र एवेति।

**हरदत्तस्तु-** एकार्थीभावस्तावद्राजपदेन राजपुरुषोपस्थापनाय पुरुषपदेनाप्युभयो- पस्थापनायावश्यकः। अन्यथा राज्ञः पुरुषोऽश्वश्च इतिवद् राजपुरुषोऽश्वश्चेति राज्ञः पुरुषो देवदत्तस्य इतिवद् राजपुरुषो देवदत्तस्य चेति चापत्तिः। न पुनर्जहत्स्वार्थवृत्तौ राजपदानर्थक्यं युक्तं पश्यामः। तथा सति राज्ञो बोधसम्भवेन।

राजपुरुषमानयेत्यत्र पुरुषमात्रस्यानयनप्रसङ्गः। न च राज्ञः प्रतीयते समासे शक्तिः कल्पना मानाभावात्। नापि राजपदं वाक्ये व्युत्पन्नः पुनः समासे व्युत्पत्तिग्रहोऽपेक्ष्यते। तस्मादजहत्स्वार्थैव वृत्तिः। अर्थाभिधान-प्रकारभेद इत्येव साम्प्रतम्। एवं चैकार्थीभाववद् व्यपेक्षापि समासादौ। अन्यथैकार्थीभावमात्रमित्यत्र द्रष्टुं गतः कृष्णं श्रितो गुरुकुलं विष्णुमित्र इत्यादौ समासप्रसङ्गः। तस्मादेकार्थीभावो व्यपेक्षाऽजहत्स्वार्था चेति त्रयं परिभाषावृत्तिहेतुः।

न चाथैतस्मिन् व्यपेक्षायां सामर्थ्ये योऽसावेकार्थीभावकृतो विशेषः स वक्तव्य इति व्यपेक्षादूषणार्थकभाष्यविरोध इति वाच्यम्। व्यपेक्षामात्रवादे तद् दूषणाभिधानात्। न चैवमप्येकार्थीभावशून्ये पराङ्गद्भावे तन्निमित्तग्रहणाद् विभक्तौ क्रियाकारकसम्बन्धाविनाभावात् क्वचिदन्तरान्तरेण युक्तग्रहणाच्च सर्वत्रादोषेणैकार्थी- भावशून्ये परिभाषाप्रवृत्यभावेऽप्यक्षतेः। अत एव 'संसृष्टार्थानां सम्बन्धार्थानामित्यादिना सामर्थ्यद्वयसमुच्चयो वृत्तौ ध्वनित इति व्युत्पादयाम्बभूव।

अत्रेदं प्रतिभाति- न तावदाद्य एकार्थीभावोऽखण्डं समासमभ्युपेत्येति कैयटोक्तिर्युक्ता। अथ क्रियमाणेऽपि समर्थग्रहणे किं सामर्थ्यं नाम। पृथगर्थानामेकार्थीभावः सामर्थ्यम्। क्व पृथगर्थानि क्व वैकार्थानि। वाक्ये पृथगर्थानि, समास एकार्थानि इत्येकार्थीभावोपपादकभाष्यविरोधात् न चाखण्डे पदानि सन्ति, येनैतद् स्यात्। तुल्ययुक्त्या वाक्यस्याप्यखण्डत्वापत्तेश्च। अन्यथाऽर्धजरतीयत्वापत्तेः।

ननु नित्यवादिशाब्दिकास्तु वृत्तिवाक्ये नित्ये विविक्तविषये मन्यन्ते इति कैयटेनोक्तत्वात्। अत्रेष्टापत्तिरिति चेत् तर्हि वाक्येऽप्येकार्थीभाव एव स्यात्। तथा च वाक्ये व्यपेक्षेति भाष्यासङ्गतिः स्यात्। एवं 'वा'वचनानर्थक्यमप्यसङ्गतं स्यात्। व्यपेक्षायां समासो न, एकार्थीभावो न इति विविक्तविषयत्वादनयोर्बाध्यबाधकभावो न भवति, एकार्थानां विकल्पनमिति कैयटनैव तद्भावार्थस्योपवर्णितत्वात्। न ह्यखण्डे वाक्ये परस्पराकांक्षारूपव्यपेक्षासम्भवः, किं बहुना वाक्यपदयोरखण्डत्वे तुल्ययुक्त्या स्थिते व्याकरणस्याविधिमात्रस्यालग्नकतापत्तिः प्रकृतिप्रत्ययागमादेरसत्वात्।

अथ कोशकल्पनान्यायेन यश्च शास्त्रप्रवृत्तिः प्रकृत्यादि "समर्थः पदविधिः"[1] कल्पनयेत्युच्यते, "सह सुपा"[2] इत्याद्यपि शास्त्रान्तर्गतत्वात् तादृशायामेवेति कथमखण्डमभ्युपेत्य प्रवर्तताम्। तस्मान्नाखण्डपक्षाश्रयणेन प्रथमपक्ष इति स्यादेव तत्रापि जहदजहद्विचारप्रवृत्तिः।

एतेन यद्यपि शब्दान्तरमेव वृत्तिरवयवा वर्णवदनर्थकास्तथापि सादृश्यात् तत्राध्यवसानं पदानामाश्रित्य पृथगर्थानामेकार्थीभाव इत्युक्तमिति पूर्वमुदाहृतभाष्यावतारः कैयटोक्तो विद्वद्भिर्नादरणीयः। अपि चोक्तरीत्या समासवद् वाक्येऽप्येकार्थीभावाभ्युपगमे व्यपेक्षायां सामर्थ्ये परिभाषायां च सत्यां यावान् व्याकरणे पबन्धो नाम स सर्वः संगृहीतः समासस्त्वेकोऽसंगृहीतः। एकार्थीभावसामर्थ्ये च समासस्त्वेक एव संगृहीत इति भाष्यं समास एवैकार्थी भावोऽन्यत्र व्यपेक्षेति स्ववचनं च विरुद्धं स्यात्, वृत्ताविव वाक्येऽपि विशेषणयोगानापत्तेश्च। एवं च वृत्तिविषये बहुधा बुधैः तत्र-तत्र ग्रन्थेषु विचारितम्।

---

5 पा.सू. 2.1.1

6 पा.सू. 2.1.4

ISSN - 0974-8946
अप्रैल-जून 2018

शोधप्रभा
वर्षः 43, द्वितीयाङ्कः

# न्यायशास्त्रानुशीलने शब्दशास्त्रस्योपयोगित्वम्

**डॉ. शिवशङ्करमिश्रः***

पाणिनीयं काणादं च सर्वशास्त्रोपकारकम् इत्ययं प्रवादः अहमहमिकया प्रसिद्ध एव। यतः तर्कपदार्थाभ्यामेव राद्धान्तावगम इत्यनुभवः सर्वेषामस्त्येव। तर्कस्य न्यायमूलकत्वात् पदार्थोपस्थितेः शक्त्यधीनत्वात् शक्तेश्च व्यवहारादिज्ञानात् ततोऽप्यधिकं व्याकरणाच्च समवगमात् नूनमेव व्याकरणाशास्त्रं प्रथमतोऽपरिहार्यतया ज्ञातव्यमेव। तदेवेयं प्रथमा विद्येत्यभिमतम्। उक्तञ्च **इदमाद्यं पदस्थानं सिद्धसोपानपर्वणाम्।।**[1] इत्यादि। प्रधानपदेनाप्यस्य शास्त्रस्य व्यवहारता भवत्येव। इदमनुभूतं सर्वेषां यत् न हि व्याकरणमन्तरा कस्यचिदपि शास्त्रस्य शब्दमपि केनापि कथमपि ज्ञातुं शक्यते। तदेवोक्तं भर्तृहरिणा–

**अर्थप्रवृत्ततत्वानां शब्दा एव निबन्धनम्।**
**तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते।।**[2] इत्यादि।।

अस्य साक्षाद् विवरणमपि केनचित् श्लोकेनैवोपबबन्ध–

**शब्दार्थसम्बन्धनिमित्ततत्त्वं वाच्याविशेषेऽपि च साध्वसाधून्।**
**साधुप्रयोगानुमिताँश्च शिष्टान्न वेद यो व्याकरणं न वेद।।** इत्यादि।

अतः अर्थस्य प्रवृत्तौ व्यवहारे यन्निमित्तं भवति तस्य संसर्गरूपान्तरविवेके व्याकरणमेव शरणम् इत्यवगन्तव्यम्। अतः न्यायशास्त्रीयपदार्थानां किं वा शास्त्रान्तरीयपदार्थानां सम्यगवबोधायेदं पवित्रं शास्त्रमवश्यमेवाकलनीयमेव। अन्यथा सर्वं निगदमात्रं भवति। तदेव भाष्यकारोऽप्याह–

**यदधीतमविज्ञातं निगदेनैव शब्द्यते।**
**अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्।।**[3] इत्यादि।

स्वयमेव भर्तृहरिरपि कण्ठरवेणास्य महिमानमाह–

---

* शोधविभागाध्यक्षः, श्री.ला.ब.शा.रा.सं.विद्यापीठम्, नवदेहली

1. वाक्यपदीयम्
2. वाक्यपदीयम् ब्र.का. 13
3. महाभाष्य पस्पशाह्निक

**नानर्थिकामिमां कश्चिद् व्यवस्थां कर्तुमर्हति।**
**तस्मान्निबध्यते शिष्टैः साधुत्वविषया स्मृतिः॥**[1] इत्यादि।

अर्थात् आस्तिको वा नास्तिको वा कोऽपि सम्भिन्नबुद्धिजनः व्याकरणशास्त्रमन्तरा स्वकीयस्य शास्त्रस्य किमपि प्रतिपादयितुं न शक्नोति। अतः सर्वेषां व्याकरणमाकलनीयमेव। यथा चार्वाका वदन्ति- **त्रयो वेदस्य कर्तारः धूर्तभाण्डनिशाचराः।** इति। तत्र तर्कञ्चोपस्थापयन्ति यत् वेदे **जर्फरी तुर्फरी** प्रभृतिशब्दानां प्रयोगः प्राप्यतेऽतोऽशिष्टशब्दप्रयोगात् वेदस्य शिष्टकर्तृता नाभिव्यज्यते। तेनावश्यमेव वेदा अन्यथाकर्तृकाः। यद्यपि नायं सिद्धान्तः तथापि अपदार्थद्वारैव वेदस्यावेदत्वं प्रतिपादयन्ति। अपदार्थज्ञानेऽपि प्रतियोगितया पदार्थज्ञानं कारणम्, तत्रापि पदार्थज्ञानाय साध्वसाधुविवेकाय च व्याकरणं नितान्तमेव सर्वेषामाश्रयणीयमेव। तदेव चार्वाकोपस्थापितदोषस्य प्रकृतिप्रत्ययाभ्यामुक्तप्रयोगयोः साधुतामुपपाद्य तेषां मतस्यान्यथात्वमेवोपपाद्यते। अतो नास्तिकानामपीदं शास्त्रं शरणम्। आस्तिकानां तु परमं शरणं भवत्येव। तदेव वदन्ति-

**आपः पवित्रं परमं पृथिव्यामपां पवित्रं परमं च मन्त्राः।**
**तेषां च सामर्ग्यजुषां पवित्रं महर्षयो व्याकरणं निराहुः॥**[2] इत्यादि।

एतेन हेतुना न्यायशास्त्रे व्याकरणस्य महत्युपयोगिता भवत्येव। स्पष्टं पश्यामो यत् व्युत्पत्तिवादग्रन्थे ''**शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्गः संसर्गमर्यादया भाषते**[3]'' इत्यस्य व्याख्यावसरे संसर्गः द्विविधः- अभेदः तदतिरिक्तश्च इति प्रतिष्ठापितः। तदतिरिक्तस्य इत्यनेन भेदसंसर्गः गृह्यते। स च प्रतियोग्यनुयोगिभावः, विषयविषयिभावः, स्वस्वामिभाव इत्यादि टीकाकृद्भिरुपपादितः। तत्र न्यायमते अनुयोगितावृत्तिधर्मस्य संसर्गत्वमिति प्रसिद्धं तथाप्यनुयोगिप्रतियोगिभाव इत्युभयनिष्ठसम्बन्धस्य सम्बन्धत्वं कथमित्यत्र स्वयमेव महान् नैयायिकः जयदेवमिश्रः समाहितवान् यदिदं वैयाकरणरीत्या। तेन स्पष्टं प्रतिभाति यत् वैयाकरणसिद्धान्तानां बहुत्र न्यायसिद्धान्तोपपादनेष्वाश्रयणं कर्तव्यमेव भवति। तत्र बहुधा निरूपितत्वं सप्तम्यर्थः, अनुयोगित्वं वा सप्तम्यर्थ इत्याद्युल्लेखः प्राप्यते तस्य समाधानमपि व्याकरणदिशैव कर्तुं शक्यते। यतः न हि भवति कुत्रापि सङ्केतसम्बन्धेन निरूपितत्वं सप्तम्या अर्थः, अपितु विषयत्वं सप्तम्यर्थः। सा च विषयता निरूपितत्वरूपा, अनुयोगित्वरूपा यथायथं व्याख्यातव्या अन्यदेतत्। अतोऽपि सिद्ध्यति यत् एवम्भूतानां पदानां विवरणं व्याकरणमूलकसिद्धान्तेनैव कर्तुं शक्यते। किञ्च न्यायभाष्यकारस्य बहुधा सामञ्जस्यं प्राप्यते व्याकरणग्रन्थेषु। तदेव नागेशोप्याह वैयाकरणसिद्धान्तलघुमञ्जूषायां स्फोटनिरूपणप्रकरणे- **तदुक्तं न्यायभष्यकृता पदसमूहो वाक्यमर्थ-समाप्ताविति।**[4] एतेन समुद्धृतदृष्टान्तेनार्थसमाप्तिः, अर्थपर्यवसानमित्यादिना समर्थनमप्युभयोः शास्त्रयोः

---

1. वाक्यपदीयम् ब्र.का. 29
2. स्वोपज्ञटीका वाक्यपदीयम् का.सं. 14
3. व्युत्पत्तिवादः
4. वैयाकरणसिद्धान्तलघुमञ्जूषा शक्तिप्रकरण पृ.1

परस्परमुपकारकत्वमङ्गीक्रियत एव। यद्यपि न्यायमते शक्तं पदमिति सिद्धान्त अभ्युपेयते तथाप्यत्र सुप्तिङन्तं रूपं पदमवश्यमेव ग्राह्यम्। तेषामेव प्रयोगार्हताया अभिमतत्वात्। तदेव परिनिष्ठितं हि प्रयोक्तव्यम्। अस्यैव साधुत्वव्यवहारः प्रयोगेष्वभियुक्तानां सम्मतः। परिनिष्ठितत्वं हि **अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्ततया**[1] प्रतिष्ठापितमेव। इदमपि परस्परसम्बन्धे मानम्। एवमेव प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधस्य नैयायिकानां प्रमुखसिद्धान्ततयाङ्गीकारेऽपि क्वचित् भाष्यप्रामाण्यात् शास्त्रव्यवहाराच्च तर्कानुकूल्यात् नैयायिकाः तं पक्षं परित्यजन्ति। यथा पश्य मृगो धावति, कोकिलः कूजति इत्यत्र धात्वर्थमुख्यविशेष्यकशाब्दबोधस्यैवाङ्गीकर्तव्यतया नैयायिका अपि व्यापारमुख्यविशेष्यकशाब्दबोधमङ्गीकुर्वन्ति। तदेवाह बच्चाझामहोदयः- "न हि राजाज्ञास्ति यत् सर्वत्र नैयायिकाः प्रथमान्तार्थमुख्यविशेष्यकमेव शाब्दबोधं स्वीकुर्वन्त्विति"[2]। यत्र तु लोकप्राधान्यात् तादृशानुभवाच्चानुगमः क्रियते तथा तत्र प्राधान्यात् प्रथमान्तार्थमुख्यविशेष्यकः शाब्दबोध एवाङ्गीक्रियत इति। एवमेव व्यापारलक्षणेऽपि नैयायिकानामिव वैयाकरणमतेऽपि तज्जन्यत्वे सति तज्जन्यजनकत्वमित्यादिलक्षणं समुपलभ्यते। समर्थितं चैतत् दर्पणटीकाकृता हरिवल्लभशर्मणा। तथा च नैयायिका अपि विवशतः बौद्धार्थमप्यङ्गीकुर्वन्ति। अन्यथा कृतिजन्यफलाश्रयस्य कर्मताङ्गीकाराय फलस्य चेदानीमनुत्पन्नत्वात् कारणस्य कार्योत्पत्तेः प्राक्क्षणादव्यवहितपूर्वत्वेन सत्त्वात् कथं तत्र फलाश्रयता सम्भाव्येत, अतः बौद्धार्थमेवाङ्गीकृत्य तत्त्वनिस्तारः सम्भाव्यते। तदेव आपाततः अङ्गीकृतो नैयायिकैः। एवमेव स्तोकः पाकः इत्यत्र सत्यपि क्रियाविशेषणत्वे कर्मणो वारणाय भावकृतां साधुत्वमात्रार्थकतया धातुनैव तत्र पाकादिप्रतिपादनात् इत्यर्थतः क्रियापदस्य सार्थकप्रत्ययान्त-धातूपस्थाप्यार्थपदत्वमादाय वारणं कृतम्। तदनु बहुत्र स्थले एवंविधं समाधानं आचक्षाणाः सिद्धान्तभूतं समाधानमाह-यत् यत्र धातुमात्रस्यैव पाकादौ तात्पर्यम्, तत्र तद्विशेषणवाचकपदात् द्वितीयैव। यत्र तु कृदन्तसमुदायस्य पाकादौ तात्पर्य तत्र तादृशपदं कृदन्तसमुदायसमानविभक्तिकमेव। अत्र प्रमाणत्वेन परिगृहीतं कातन्त्रव्याकरणम्।[3] अयं भावः वैयाकरणानां सिद्धान्ते कृदभिहितो भावः द्रव्यवत् प्रकाशत इति प्रसिद्धम्। अयं सिद्धान्तः भाष्यारूढः। तदा यदा स्तोक इति कृदन्ते विशेषणं तदा द्रव्यवत् प्रकाशनात् तत्सामानाधिकरण्येन प्रथमान्ततयैव प्रयोगः। यदा तु क्रियायां विशेषणं तदा क्रियाविशेषणानां क्लीबत्वं कर्मत्वं च इति नयेन क्लीबता कर्मता च। एतेन स्पष्टमेव जातं यत् अत्र विषये महता समारम्भेण परिश्रमं कृत्वापि नैयायिकाः न समाधिं प्राप्तवन्तोऽतः कातन्त्रं व्याकरणमेव शरणं जग्मुः।

एवमेव क्रियाविशेषणानां क्लीबत्वं कर्मत्वं च इत्यपि न्यायमतेऽभियुक्तवाक्यमङ्गीक्रियते। तच्च त्रिमुन्यङ्गीकारादेव मन्तव्यम्। अत्रायमाशयः यत् फलस्यापि व्यपदेशिवद्भावेन फलाश्रयता भवति। तेन तस्यापि फलाश्रयत्वात् कर्मत्वं जायते। अतः तत्र कर्मविधानं **कर्तुरीप्सिततमं कर्म**

1. लघुशब्देन्दुशेखर अजन्तपुँल्लिङ्गप्रकरणम्
2. व्युत्पत्तिवादटीका
3. तदुक्तं कातन्त्रपरिशिष्टकृता "कथं स्तोकः पाकः कृदन्तविशेषणत्वात्। धात्वर्थैकाधिकरण्ये तु स्तोकमोदनस्य पाक इति स्यादेवेति" वदन्ति।

इत्यनेनैव कर्तव्यम्। नपुंसकता च यत्र सामान्यतया बोधः भवति तदा **सामान्ये नपुंसकम्** इति नियमेन नपुंसकत्वं भवति। क्रियायां विशेषधर्माणामभासनात् सामान्यधर्मः स्पष्टमनुभूयत एव। एवम्प्रकारेणास्य समन्वयोऽपि कर्तव्य एव। एतत्सर्वं नागेशेन स्वग्रन्थे लघुशब्देन्दुशेखर उपपादितम्। तद्यथा- **फलस्यापि व्यपदेशिवद्भावेन फलसम्बन्धित्वात्कर्मत्वम्। अत एतत्समानाधिकरणे 'स्तोकं पचति' इत्यादौ कर्मत्वसिद्धिः।**[1] व्यपदेशिवद्भावस्तु उभयसिद्धान्तेषु समान एव। तथा च तत्स्वरूपमुपस्थाप्यते। **''एकस्मिन्- असहाये। निमित्तसद्भावात्- वर्णसमभिव्याहाररूपसहायसत्त्वात्। विशिष्टोऽपदेशः-मुख्यो व्यवहारः, तद्विशिष्टेन तुल्यं कार्यं कर्तव्यमिति शेषः।**[2]

**असहायत्वञ्च- मुख्यधर्मवदघटितत्वम्, मुख्यधर्मवदघटकत्वम्, मुख्यधर्मवदसमभि-व्याहृतत्वं चेति त्रितयरूपं बोध्यम्। मुख्यधर्मश्चारोप्यमाणो धर्मः। तथा च सभासन्नयनशब्दे भासन्नयनवृत्तिवृद्धत्वम्, भसन्नयनशब्दस्य समर्थप्रातिपदिकत्वम्, सभ्शब्दे वृद्धित्वस्यानतिदेशेन सभासन्नयनशब्दस्य वृद्धत्वं च नेति त्रयाणां क्रमेण फलानि बोध्यानि। एवं दरिद्राधातावपि त्रयाणां फलान्येकत्र बोध्यानि। किन्त्वेकपुत्रसत्त्वे एवेति। बहुपुत्रसत्त्वे तस्य ससहायत्वादिति भावः। अनेनास्य न्यायस्य लौकिकत्वं सूचितम्; स्पष्टं चेदं भाष्येऽपि।**[3] यतः भाष्यकारः **अस्यापत्यं इः**[4] इत्यादौ कथञ्चिन्निर्वाहेऽपि धुक् इत्यादौ असहाये घटकत्वस्य कथमप्यसम्भवेन स्वयमेवाद्यन्तलक्षणे स्थूलतामङ्गीकृत्य एवं लक्षणं प्रतिपादितवान् तथा च अयं ग्रन्थः **अत्र मते आदित्व-मध्यमत्वा-ऽन्तत्वलक्षणानि वार्तिककृन्मतोक्तान्येव; परं घटत्वघटितत्वलक्षणे भिन्ने** एव। तन्मतेऽसहाये घटकत्व-घटितत्वे न स्तः। **तथा च 'इरि'इत्यादौ सूत्रकृन्मते निर्वाहेऽपि 'इपाये'इत्यादौ एकाज्घटितत्वव्यवहारो न स्यादित्येतदर्थं परिभाषाया आवश्यकत्वेन तयैव 'आभ्यामि'त्यादावपि सिद्धौ व्यापकत्वात् परिभाषैवाश्रिता भाष्यकारेण। युक्ततरञ्चैतत्, लोके स्वस्मिन् स्वघटकत्वस्वघटितत्वव्यवहारस्य भाक्तस्यैव प्रसिद्ध्या सूत्रवार्तिक्योर्मते स्वस्मिन् स्वघटकत्वस्वघटितत्वव्यवहारस्य मुख्यत्वापत्त्या लोकविरोधापातात्** एतेनात्यन्तं स्पष्टं भवति यत् वैयाकरणसम्पदितप्रयोगाणां साधुत्वसम्पादनबलादेव नैयायिकाः अन्ये वा तस्य प्रयोगं समाचरन्ति। तत्र मानं व्याकरणमेव। साधुत्वासाधुत्वविषये एषा स्मृतिरसाधरणतयैव स्वकीयं माहात्म्यमुपपादयति। अत एव अस्याः स्मृतिपदेन सम्बोधनञ्जायते। किञ्च सर्वत्रापि व्याकरणसूत्राणां समादरोऽवलोक्यते। यत्र क्वचित् व्याख्यातृभिरन्यथाभावः समावेश्यते तत्रैव खण्डनेष्वाग्रहः। तदेव कौण्डभट्टोऽप्याह-

**ढुण्ढिं गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान्।**
**सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचो दूषये।।**[5] इत्यादि।

---

1. लघुशब्देन्दुशेखर कारकप्रकरणम् पा.सू.1.4.49
2. परिभाषेन्दुशेखरे भूति टीका परिभाषा संख्या 30
3. परिभाषेन्दुशेखरे भूति टीका परिभाषा संख्या 30
4. पाणिनिसूत्रम्
5. वैयाकरणभूषणसारे मङ्गलवादः श्लो.3

इदमत्राभिधेयं भवति यत् आचार्येषु सर्वत्र समेषामादारो भवत्येव परन्तु तेषां व्याख्यानमन्यथा आग्रहेण वा क्रियते केनचित् तर्हि तस्यैव प्रत्याख्याने सर्वेषां प्रयासः परिलक्ष्यते। अन्यत्र तु सर्वं समानमेव भवति। यतः पारेदृश्वान आचार्या अवश्यमेव स्वकीयेन अगाधेन तपसाबाधितमर्थं विनिश्चित्य लोकोपकाराय स्वकीयकरुणयाभिनवानि मतान्युपस्थापयन्ति। अत एव तेषां कृते सुहृद्भूताः भूत्वा वा इति विशेषणमुपस्थाप्यते। अतः स्पष्टमभिधातुं शक्यते यत् शब्दसिद्धान्तसमन्वये वैयाकरणानां बहुधानुकरणं न्यायशास्त्रे स्वाभाविकमेव। तदेवात्र बहुधा दृष्टम्। क्वचित्तु भवति विमतिः, तत्र यथासंस्कारं व्याख्यानान्यपि स्वाभाविकान्येव। तदेवाख्यातपदेन बहुधा स्वमते तिङां बोधेऽपि। नैयायिका अपि क्वचित् तिङन्तस्यैव बोधं कुर्वन्ति। तदेव **आख्यातमाख्यातेन क्रियासातत्ये** इत्यादौ तैः समादृतमपि। उपन्यस्तमपि- **अश्नीत पिबतेत्येवं सततं यत्राभिधीयते सा अश्नीतपिबता। पचतभृज्जता। खादतमोदता।**[1] इत्यादि।

क्वचित् आपाततः प्रतीयमानमपि साम्यं विमोहयति कार्यकारणभावान्। यथा- **रक्षोहागमलघ्वसन्देहाः प्रयोजनम्** इत्यत्र प्रयोजनमित्यत्रैकवचनं समाधीयते। वेदाः प्रमाणमितिवत्। यतोऽयं सामान्यनियमः **यल्लिङ्गं यद्वचनं या च विभक्तिः विशेष्यस्य तल्लिङ्गं तद्वचनं तद्विभक्तिः विशेषणस्यापि।** तेन सर्वत्रापि प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीतिवत् समानवचनेनात्रापि भवितव्यमेव। परन्तु विविधान् प्रयोगान् समीक्ष्य तर्कसिद्धो नियमोऽङ्गीकृतो यत् विशेष्यवाचकपदोत्तरविभक्ति-तात्पर्यविषयीभूतसंख्यायाः यत्र विशेषणवाचकपदोत्तरपदविभक्त्याविवक्षा कृता तदैव समानवचनकत्वनियमः। यदा तु विरुद्धवचनस्य विवक्षा कृता तदा सति प्रयोजनेऽयं नियमः त्यज्यते। यथा- 'इति हेतुस्तदुद्भवे' इत्यत्र स्वयमेव काव्यप्रकाशकृता 'इति हेतुः न तु हेतवः' इत्यादिसिद्धान्तेन समेषां सम्भूय हेतुता परिकल्पिता। अतः चक्रचीवरन्यायेन कारणताया अङ्गीकारो जातः। तेन सामग्रीघटकेषु कारणेषु यद्येकमपि कारणं न भवति तदा कार्यस्योत्पत्तिर्न जायते। तेन काव्यस्योत्पत्तिः प्रतिभादिकारणकूटमध्ये एकस्याप्यभावे नोत्पद्यते। यत्र तु तृणारणमणिन्यायेन कारणता तदा एकेनापि कारणेन कार्यस्योत्पत्तिर्जायते। वेदाः प्रमाणमित्यत्र सर्ववेदगतप्रमितकरणतावच्छेदकस्यैक्येन भानस्य लाभायैकवचनमुपपादितम्। तथैव **पुरूरवोमाद्रवसौ विश्वेदेवाः** इत्यादिवाक्यानां व्याख्यानं जायते। परन्तु महाभाष्यप्रदर्शितवाक्ये **रक्षोहागमलघ्वसन्देहाः प्रयोजनम्** इत्यादिरूपे न तथा गतिः। यतः रक्षा, ऊहः, लघुः, असन्देह इत्यत्र सर्वत्रापि व्याकरणाध्ययनस्य प्रयोजनं वक्तव्यम्। परन्त्वागमस्तु प्रयोजको भवति अत एव प्रयोजयतीति प्रयोजनात् अथवा प्रयोज्यत अनेनेति प्रयोजनमिति व्युत्पत्तिवैचित्र्यम् आगमसन्नियोगेन जायते। तदेव **ब्राह्मणेन निष्कारणो धर्मः, षडङ्गो वेदोऽध्येयो ज्ञेयश्च।** इति वाक्यमपि सङ्गच्छते। निष्कारण इति विशेषणं सूचयति यत् नित्यकर्मवत् ब्राह्मणस्य शास्त्राध्ययनं भवेदेव। अन्यथा प्रत्यवायप्राप्तिः। तेन प्रयोजनं प्रयोजनश्च इत्यादिना विग्रहेण एकशेषोऽवगन्तव्यः। तथा च सूत्रम्- **नपुंसकमनपुंसके-नैकवच्चास्यान्यतरस्याम्**[2] इत्यादि। अस्योदाहरणानि च भवन्ति- **शुक्लः पटः, शुक्ला शाटी, शुक्लं वस्त्रम्। तदिदं शुक्लम्, तानीमानि शुक्लानि** इति। अतः एतद्भाष्यानुरोधेन एकशेषद्वारैव

1. वैयाकरणसिद्धान्तकौमुदी, तत्पुरुषसमास, मयूरव्यंसकादयश्च पृ.सं.179
2. वैयाकरणसिद्धान्तकौमुदी, एकशेषप्रकरणम्, पृ.सं. 208

समाधानं कर्तव्यम्। तेन वाक्यस्य विवरणं भवति रक्षा- प्रयोजनम्, ऊहः- प्रयोजनम्, लघुः-प्रयोजनम्, आगमः-प्रयोजनः, असन्देहः-प्रयोजनम्। इति **रक्षोहागमलघ्वसन्देहाः प्रयोजनम्।** प्रपूर्वकयुज्धातोः भावे ल्युड्विधानात् तस्य ल्युडन्तस्य नित्यं नपुंसकत्वं विज्ञेयम्। तेन रक्षा, ऊहः, इत्यादिविषमलिङ्गेन समानाधिकरणेनापि तस्य नपुंसकत्वमेव विज्ञेयम्। यथा- **विंशत्याद्याः सदैकत्वे** इति नियमेन 'शतं ब्राह्मणाः' इत्येव प्रयोगो जायते न तु शतानि इत्यादि। तथैवात्रापि नपुंसकस्यैकवचनस्य नित्यतयाङ्गीकारात् तत्रैव सुरूपतः तस्यावस्थानादेवकवचनमेव नियमेन बोद्धव्यम्। अतः एवंविधस्थले केचन व्यामुग्धा जनाः मोहेन वेदाः प्रमाणमितिवत् समानतया समाधिमाचक्षते परन्तु तत्तु न समीचीनम्। प्रदर्शितदिशा तस्य भिन्नस्वरूपत्वात्। अतो हेतोरपि व्युत्पत्तिरपेक्षिता भवति। यदि न ज्ञायते व्याकरणस्य स्वरूपं तर्हि नैयायिका अहङ्कारेण वेदाः प्रमाणमितिवत् समाधानप्रदानेनासाधुता स्यादेव।

क्वचित्तु नैयायिकाः महता समारम्भेण विभक्तीनां वाच्यार्थस्य तात्पर्यमवबोधयन्ति। तथैवावधारितेऽपि सौकर्यात् यथा एकत्वं किं स्वरूपमिति विषये यथा गदाधरभट्टेनैकत्वमुपपादितं तत्त्वत्यन्तं रमणीयमेव। अन्यथा एकत्वरूपसंख्यायाः केवलान्वयित्वात् द्विवचनस्थलेऽप्येकवचनत्वशक्तिः स्यात्। ज्ञापकसम्बल-माश्रित्य वारणे तु गौरवमेवातः एकवचनं स्वसजातीयनिष्ठभेदप्रतियोगितानवच्छेदकैकत्वरूप- सजातीय-द्वितीयरहितत्वमेकवचनार्थः न त्वेकत्वमात्रम्। अत्र साजात्यमप्याह। साजात्यं च स्वसमभिव्याहृतपदार्थ-संसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकवत्त्वरूपेण इत्यादि। अत एव पशुना यजेत इत्यादौ एकेनैव पशुना यागसिद्धिः नानेकैः। अत एव अत्र साजात्यमपि परिष्कृतं स्वसमभिव्याहृतेत्यादिना। अत्र जयाकारः श्रीजयदेवमिश्रः अस्य निष्कर्षमप्युपस्थापयति- प्रकृत्यर्थतावच्छेदकञ्च घटत्वादिः। तथा चात्र घटोऽस्तीत्यादौ स्वर्थैकत्वं घटे प्रतीयते तच्चैकत्वं घटे किमित्याकाङ्क्षायां घटवृत्तयो ये धर्माः सुप्रकृत्यर्थतावच्छेदकं घटत्वं सुसमभिव्याहृतपदार्थैतद्देशविद्यमानत्वादिस्वरूपादिसंसर्गाश्च तद्वत्त्वम्। यदि तस्मिन् देशे द्वितीयो घटोऽस्ति तदा तत्र तन्निष्ठो भेद एतद्घटगतैकत्ववान्नेत्याकारकस्तत्प्रतियोगितावच्छेदकमेव तदेकत्वम्। यदि तत्र द्वितीयो नास्ति तदा स्वयमेव स्वसजातीयस्तन्निष्ठस्तद्गतैकत्ववान्नेत्याकारको भेदो नास्ति। किन्तु देशान्तरीयघटादिनिष्ठैकत्ववान्नेत्याकारक एव तत्प्रतियोगितानवच्छेदकमेतद्देशस्थघटगतमेकत्वमिति तदेकवचनप्रतिपाद्यमिति निष्कर्षः।[1]

यत्र च एकत्राधिकरणे धर्मिद्वयं तत्र परस्परमेकत्वमादाय प्रतियोगितावच्छेदकत्वं भवत्येव। अतः प्रकृत्यर्थतासंसर्गेण तस्य निर्धारणं कृतम्। प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति नियमेन प्रकृत्यर्थगतधर्मिण्येव प्रत्ययार्थभूतायाः संख्यायाः समन्वयप्रकारोऽवगन्तव्यः। एवमेव भावाख्यातस्थले एकवचनस्य साधुत्वमुपपादितम्। यतः **लः कर्मणि च भावे चाकर्मकेभ्यः** इति नियमेन लकाराः भावे कर्मणि कर्तरि च भवन्ति। अत्र **कर्तरि कृत्** इति सूत्रतः कर्तरीति पदमनुवर्तते। तत्र नैयायिकाः कर्तृकर्मपदस्य कर्तृत्वे कर्मत्वे च लक्षणां साधयन्ति। यथा- **प्रथमानिर्दिष्टं समास उपसर्जनम्** इत्यत्र समासशब्दः समासशास्त्रे इति रीत्या समासविधायकपरः। स एव **एकविभक्ति चापूर्वनिपाते** इत्यत्र अनुवर्तमानस्सन् समासार्थविग्रहपरः सम्पद्यते। तथैव अत्रापि भवेदिति नैयायिकानामभिलाषः, परन्त्वस्मिन्नंशे विमतिर्वर्तते वैयाकरणानाम्। ते तु बहुशः तर्कैः अस्य प्रत्याख्यानं साधयन्ति। परन्तु भावस्थले

1. व्युत्पत्तिवादे, कारकप्रकरणे, जयाव्याख्या

उभयोरपि समानमेव मतम्। यतः तत्र भावे लकारस्य विधानात् कालमात्रमेव विवक्षितं भवति। अन्यत्र संख्याया अन्वययोग्यताविरहेण विवक्षा न सम्भवति। परन्त्वेकवचनमुत्सर्गतः करिष्यत इति न्यायेन एतत्सर्वं समाहितं भवति। अयमेव सिद्धान्तः नैयायिकैरप्यङ्गीकृतः। एतत्सर्वं व्युत्पत्तिवादग्रन्थे सविस्तरं वैयाकरणाभिप्रेतमुपाय विवेचितम्। एवमेवाभेदस्तादात्म्यमित्यत्रापि स्वकीयं पाण्डित्यमवलम्ब्य यत् प्रदर्शितं नैयायिकैः तत्त्वत्यन्तं समीचीनमेव। वैयाकरणैरपि तदङ्गीकरणीयमेव। तदेव परिष्कारमुखेन व्याचष्टे। तथा च परिष्कारः। भेदविशिष्टान्यत्वं वैशिष्ट्यञ्च स्वसमानाधिकरणस्वप्रतियोगित्वेत्युभयसम्बन्धेन। वृत्तिता च प्रकृत्यर्थसंसर्गमर्यादयावगन्तव्या इत्यादि। विस्तरभयाद् अस्याधिकं निरूपणं न क्रियते।[1]

आहत्य एवमपि वक्तुं शक्यते यत् न्यायसम्प्रदाये केषाञ्चित् सिद्धान्तानां वैयाकरणमतानुरोधेनैव व्याख्यानं कर्तुं शक्यते। यतः पश्यामः व्युत्पत्तिवादग्रन्थं तत्र बहुधा महाभाष्यसिद्धान्ताः अङ्गीकृताः। यथा प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामितिनयेन भावप्रत्ययान्तेषु घञादौ च तेषां साधुत्वार्थकत्वमिति मते अनर्थकतया तत्र प्रत्ययार्थभूतसंख्यानामन्वयो न शक्यते विधातुम्। अतः भावघञन्तानामपि शक्तिः तादृशे व्यापारे अङ्गीकृता। यद्युच्यते यत् प्रकृत्यर्थैकदेशेऽपि अन्वयं विधाय प्रत्ययार्थभूतकर्मादीनां समन्वयः कर्तुं शक्यते, तदा 'पचन्तं पश्य' इत्यस्मिन्नर्थे 'पचन्तौ पश्च' इत्यादिप्रयोगस्यापत्तिः प्रदर्शिता, तद्वारणाय यद्युच्यते "एकत्रविशेषणतया अन्वितस्य अपरत्र विशेषणतयान्वये मानाभावः"[2] इति नियमेन कर्मादिषु धात्वर्थस्य अन्वयो न भविष्यति, तदोच्यते तस्य विशेषणतयान्वये वारितेऽपि विशेष्यतयान्वये बाधकाभावात् व्यापारे द्वित्वादि संख्यायाः अन्वयानुरोधेन एकत्वविशिष्टकर्तृप्रत्ययसमभिव्याहारेऽपि व्यापारगतसंख्यानुरोधेन द्विवचनाद्यापत्तिः स्यादेव। एवं प्रकारेण केचन दोषाः उपस्थापिताः सन्ति। अत्र विचार्यते यत्क्रियायां संख्यायाः अन्वयः केन तर्केण भवितुमर्हति, तस्याः अमूर्तत्वात् अद्रव्यत्वाच्च। तदेव अद्रव्यभूतार्थवाचकानां चादीनां साधुत्वार्थम् "एकवचनमुत्सर्गतः करिष्यते" इति न्यायेनैव पदत्वं प्रकल्पितम्। किञ्च उक्तवान् भाष्यकारः "क्रिया च नाम अन्यतमपरिदृष्टा न शक्या पिण्डीभूतेतिनिदर्शयितुमिति"[3] न्यायमतेऽपि क्रियायाः अमूर्तरूपत्वं निर्बाधमेवाङ्गीकृतम्। अतः कश्चित् तादृशः उपायः वचनं वा साधनीयम्, अनुभवश्चोपपादनीयः। येन क्रियायां संख्याः अन्वयः सिद्ध्येत। नहि तादृशं क्वचिदेव वचनं न्यायशास्त्रे उपलभ्यते, अतः अत्र विषये व्याकरणमेव शरणं भवति सर्वेषाम्। यतः भागवान् भाष्यकारः दत्तवानेकमुदाहरणम्– "हत शायिका पश्यन्ति" इति। अत्र धात्वर्थे ण्वुल् विधानं स्पष्टम् तस्य प्रत्ययस्य अत्यन्तस्वार्थे विधानात् धार्त्थव्यतिरिक्तामर्थान्तरस्याभावात् शसोपात्तः संख्यायाः कर्मणश्चान्वयः दुरूपपादः एव, परन्तु एतत्सर्वं भाष्यानुरोधेन तत्कर्तृकाचार्थस्य प्रामाण्यमङ्गीकृत्य च संख्यायाः अन्वयः तत्र साधितो भवति। तदेव न्यायविदेन मुक्तकण्ठेन हृदयेन च एनं ज्ञाप्य सिद्धान्तं महता आदरसमारम्भेण अङ्गीकुर्वन्ति। एवं प्रकारेण बहुविधाः सिद्धान्ताः सन्ति तेषामुपजीव्यत्वं व्याकरणमूलकमेव भवति। ततो मन्येऽहं यन्न्यायप्रस्थानविवेचनस्य सम्यग्ज्ञानाय व्याकरणमाश्रयणीयमेव। तदेव संग्रहीकृत्य मया निबन्धेऽस्मिन् सर्वं प्रतिष्ठापितम्। मन्येऽहं सम्प्रति गवेषकाणां हिताय बुधाम् आह्लादाय च अलमिति।

1. अभेदस्तादात्म्यम्। तच्च स्ववृत्त्यसाधारणो धर्मः। असाधारण्यं च एकमात्रवृत्तित्वम्। तच्च स्वसामानाधिकरण्यस्वप्रतियोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टं यत्तदन्यत्वमित्येकमात्रवृत्तिधर्म एव विशेषणविभक्तेरर्थः।
2. व्युत्पत्तिवादः पृ.सं. 73
3. परोक्षे लिट् महाभाष्यम्

ISSN - 0974-8946
अप्रैल-जून 2018

**शोधप्रभा**
वर्षः 43, द्वितीयाङ्कः

# भासर्वज्ञीयमुपमानम् : न्यायदर्शनेऽभिनवदृष्टिः

**डॉ. सत्यमूर्त्तिः***

भासर्वज्ञो दशमशताब्दस्य पूर्वार्द्धे विद्यमान एको महान् नैयायिकः। तस्य तिस्रः कृतयः प्राप्यन्ते - न्यायसारः, न्यायभूषणम् गणकारिका च। न्यायसारो न्यायदर्शनस्य प्रथमप्रकरणग्रन्थरूपेण समादृतः। न्यायदर्शनस्य प्रायेण सर्वेषां प्रमुखसिद्धान्तानां साररूपेण निरूपणत्वाद् ग्रन्थस्यास्याभिधानमन्वर्थम्। न्यायभूषणमस्यैव ग्रन्थस्य स्वोपज्ञं व्याख्यानं भासर्वज्ञस्य। गणकारिकायां पाशुपतदर्शनस्य सिद्धान्ता निरूपिताः।

भासर्वज्ञो मूलरूपेण पाशुपताचार्य आसीत्। परमसौ बौद्धादिनास्तिकानां प्रखरविचारप्रहारैः क्षीयमाणाया आस्तिकपरम्पराया रक्षणार्थं न्यायनयमाश्रितवान्। उपमानस्य शब्दप्रमाणत्वं, मोक्षे सुखसत्त्वं, कर्मणो गुणत्वं चेत्यादयोऽनेक एतादृशाः सिद्धान्ता न्यायसारे न्यायभूषणे च प्राप्यन्ते; ये प्राचीनन्याये न वर्तन्ते।

प्रमाणत्रैविध्यं भासर्वज्ञस्यैकमेतादृक् मौलिकं चिन्तनं वर्तते; यत् तं न्यायदर्शनस्य सामान्यविचारसरणिं विहाय सर्वथाद्वितीयाचार्यरूपेण स्थापयति। न्यायदर्शनस्याद्याधारस्तम्भरूपेण विराजमानं आचार्यगौतमस्य न्यायसूत्रं विभिन्नेभ्यो न्यायाचार्येभ्यः परमप्रमाणरूपं वर्तते। तत्र स्पष्टतयोल्लिखितं 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'[1] इति। भूषणकारमतिरिच्य सर्वेषां न्यायाचार्याणामनुसारेण सूत्रेऽस्मिन् सूत्रकारेण स्पष्टतया चत्वारि प्रमाणानि निर्दिष्टानि सन्ति। अत एव यदि प्रमाणचतुष्टयं न स्वीक्रियेत; तर्हि न्यायदर्शने परमसमादृतेभ्य आद्याचार्येभ्यो गौतमेभ्य एव विचारभेदः समुत्पद्येत। भासर्वज्ञो स्वनवनवोन्मेषशालिन्या प्रतिभया न्यायदर्शनस्याद्याचार्यं गौतमं प्रति श्रद्दधानोऽपि मतमिदं निरस्योपमानस्य शब्दप्रमाणत्वं स्थापयति। ध्यातव्यमिदं यत् समग्रन्यायदर्शने भासर्वज्ञीयसम्प्रदाय एवेदृग्वर्तते य उपमानस्य पृथक्प्रमाणत्वं नाभ्युपैति। अनया दिशोपमानविषयिकायां भासर्वज्ञीयां विचारसरण्यां सम्यगवगाहनमनिवार्यं लक्ष्यते।

विभिन्नदार्शनिकसम्प्रदायैरुपमानस्य प्रामाण्यं भृशं चिन्तितं तद्विषये च विविधा विचाराः प्रकटीकृताः। उपमानविषये सामान्यविचारसरणिं विहाय केचन सम्प्रदाया उपमानमन्यथैव सङ्कल्पयन्ति। एकतो यत्र चार्वाक उपमानस्य प्रामाण्यमेव न स्वीकरोति तत्रापरतः सांख्यमतावम्बिनः प्रायेण[2] तस्य

* सहाचार्यः, विशिष्टसंस्कृताध्ययनकेन्द्रम्, जवाहरलालनेहरूविश्वविद्यालयः, नवदेहली

1. ***न्यायसूत्रम्*** ; 1.1.3
2. अस्मिन् विषये सतीशचन्द्रचटर्जीमहोदयस्य 'सांख्यमतावम्बिन उपमानस्यानुमानरूपत्वं स्वीकुर्वन्ती'ति मतं विभावनीयम्। (द्रष्टव्यम् - ***दी न्याय थ्योरी ऑफ नॉलेज;*** पृष्ठम् 311)

प्रत्यक्षत्वमेव मन्यन्ते।[1] वेदान्तवैशेषिकबौद्धदर्शनेषूपमानस्य प्रायेणानुमानरूपत्वमेव स्थापितम्। मीमांसकाः उपमानस्य पृथक्प्रमाणत्वं प्रतिपादयन्ति। केचन दार्शनिकाः तं प्रत्यक्षस्मृत्योः योगं मन्यन्ते अन्ये च प्रत्यभिज्ञारूपेण तमङ्गीकुर्वन्ति। एवंप्रकारेण विभिन्नेषु दार्शनिकसम्प्रदायेषूपमानविषयेऽनेका विसङ्गतयः परिलक्षिताः भवन्तिं।

न्यायभूषणे भासर्वज्ञः प्राचीननैयायिकानां भाट्टमीमांसकानां च मतद्वयमुपस्थाप्य येन प्रभावशालिरूपेण प्रत्यवतिष्ठति तेन प्रधानमल्लनिबर्हणन्यायपूर्वकमन्यानि मतानि स्वयमेव निरस्तानि जातानि। गौरवभयात् भाट्टमीमांसकानां मतस्य प्रत्यवस्थानं तैश्चाभिमतस्योपमानस्य स्मृतिरूपत्वप्रतिपादनमत्र विशेषेण नोल्लिख्येते। परमतनिरासनानन्तरं भासर्वज्ञेनोपमानस्य शब्दप्रमाणरूपत्वं स्थापितम्।

भासर्वज्ञानुसारेण 'यथा–गोस्तथा गवयः' इत्याद्युपमानवाक्यं शब्दरूपत्वेन शब्दप्रमाणान्तर्भूतमेव। अस्य सिद्धिस्तेनानुमानप्रक्रियया एव प्रदर्शिता - 'उपमानं शब्दान्तर्भूतं; वाक्यरूपत्वात्; अग्निमानयेत्यादिवाक्यवदि'ति।[2] अनेन विधिनोपमानमपि शब्दप्रमाणविशेष एव सिद्ध्यति। शब्दान्तर्भूतमपि यदि तस्य पृथक्प्रमाणत्वं प्रतिपाद्येत; तर्हि विध्यर्थवादादिविभिन्नशब्दप्रकारैः प्रमाणान्यनन्तसङ्ख्याकानि स्युः। अत उपमानस्य शब्दप्रमाणेऽन्तर्भावकरणमेव साधीयस्।

**प्राचीनन्यायाभिमतस्योपमानस्यागमेऽन्तर्भावः**

प्राचीनन्याये भाष्यकारवात्स्यायनप्रभृतयो दार्शनिका संज्ञासंज्ञिसम्बन्धप्रतिपत्तेरुपमितित्वं मन्यन्ते।[3] यथा गवयं जिज्ञासमानः कश्चिज्जनः 'यथा गौस्तथा गवय' इति वनेचरवाक्यं श्रुत्वा गवयान्वेषणाय वनं गत्वा तत्र गोसदृशं पिण्डं पश्यति; तदाऽसौ वनेचरवाक्यं स्मरति। तदनन्तरं 'गवयोऽयमि'ति ज्ञानं जायते। गवयसंज्ञाया गवयसंज्ञिनश्च वनस्थपशोः मध्ये योऽभिधानाभिधेयरूपः सम्बन्धो वर्तत; तस्य ज्ञानमेवोपमितिस्तस्याश्च करणं सादृश्यज्ञानमेवोपमानमुच्येते। प्राचीनन्यायसम्मतमुपमानलक्षणं भासर्वज्ञः शब्दान्तरेणोपस्थापयति - "तत्र वाक्यज्ञानजनितसंस्कार- जनितस्मृतिसहकारिणेन्द्रियेण जनितं सारूप्यज्ञानमुपमानं, संज्ञासज्ञिसम्बन्धश्च प्रतिपत्तिः तत्फलम्"।[4]

अनेनैव प्रकारेण 'यथा माषस्तम्बः तथा माषपर्णी'; 'यथा मुद्गस्तम्बः तथा मुद्गपर्णी' इत्यादिवाक्यानि श्रुत्वा तत्संस्कारसम्पन्नो जनो यदा वने तत्तदौषधिसादृश्यवन्तो वनस्पतीन् पश्यति तदाऽसौ माषपर्णीमुद्गपर्ण्यादीनौषधीन् सारल्येन प्रत्येति। एवंप्रकारका अनेके दृष्टान्ता लोके प्राप्यन्ते।[5]

---

1. "यस्तु गवयस्य चक्षुः सन्निकृष्टस्य गोसादृश्यज्ञानं तत्प्रत्यक्षमेव। अत एव स्मर्यमाणायामेव गवि गवयसादृश्यज्ञानं प्रत्यक्षम्।" - ***सांख्यतत्त्वकौमुदी***; पृष्ठम् 173-174.
2. ***न्यायभूषणम्***; पृष्ठम् 417.
3. ''समाख्यासम्बन्धाप्रतिपत्तिरुपमानार्थः।'' – ***न्यायभाष्यम्*** ; 1.1.6
4. ***न्यायभूषणम्*** ; पृष्ठम् 419.
5. वस्तुतस्त्वेते समग्रा दृष्टान्ता न्यायभाष्यादेवोद्धृताः। (द्रष्टव्यं ***न्यायभाष्यम्*** ; 1.1.6)

भासर्वज्ञानुसारेण प्राचीनन्याये स्वीकृतं संज्ञासंज्ञिसम्बन्धप्रतिपत्तिकरणं सादृश्यज्ञानरूपमुपमान-शब्दप्रमाणमेव; न तु प्रमाणान्तरम्। स्वमतं पुष्णातुमसौ निम्नलिखितान् तर्कानुपस्थापयति।

**( क ) प्रश्नोत्तराभिधानेनोपमानस्यागमत्वसिद्धिः** - संज्ञासंज्ञिसम्बन्धप्रतिपत्तिस्त्वाप्तवाक्यादेव भवति; गवयदर्शनोपरान्तं तत्स्मृतिरेव जायते। यदिरुपमातरं कश्चित् पृच्छेत् 'कथं जानीषेऽयं गवय' इति; तर्हि स उत्तरं ददाति - 'वनेचरवचनादवगतो मया' इति। अस्मादेवोपमानस्यागमप्रमाणत्वं सिद्ध्यति।

**( ख ) अन्यप्रमाणानिर्देशादुपमानस्य प्रमाणान्तरत्वासिद्धिः** - लोकानुभवेऽपि प्रमाता सर्वत्र त्रीण्येव प्रमाणानि निर्दिशति। यथा 'प्रत्यक्षेण घटं पश्यामि'; 'धूमेनाग्निं जानामि'; 'आगमेन स्वर्गमवगच्छामि' इत्यादीनि। कश्चिदपि प्रमाताऽनयैव रीत्योपमानं निर्दिशन्न दृश्यते।[1] अनेनाप्युपमानस्य प्रमाणान्तरत्वासिद्धिः।

**( ग ) चित्रलेखादिवदुपमानस्य प्रमाणान्तरत्वासिद्धिः** - अत्र भासर्वज्ञोऽत्यन्त-शोभनदृष्टान्तेनोपमानस्य प्रमाणान्तरत्वं निरस्यति; यस्य निर्देशो मूलन्यायसारे न लभ्यते। तदनुसारेण कश्चिज्जनश्चित्रलेखादिप्रदर्शनेन 'एतादृश उष्ट्रः' उत 'एतादृशो गजः' इत्यादिवाक्यैरन्यजनमुष्ट्रं गजं वा बोधयति। सोऽन्यजनश्चोष्ट्रदर्शनं गजदर्शनं वा विनैव कीदृश उष्ट्रः कीदृशो वा गज इति प्रत्येति। परवर्तिकाल उष्ट्रादिदर्शने सति तत्तज्ज्ञानानां स्मृतिरेव भवति। एवंविधस्य ज्ञानस्य करणं शब्दादविशेष एव प्रमाणं मन्यते। गवादिदर्शनगवादिचित्रदर्शनयोर्मध्ये नास्ति कश्चन मौलिको भेदः। तत आप्तवाक्यादेव संज्ञासंज्ञिसम्बन्धप्रतिपत्तिर्जायते। अतो यथाऽऽप्तवाक्येन चित्रदर्शनादिमाध्यमेन सादृश्यप्रतिपत्तिर्प्रमाणान्तरं नोच्यते तथैवोपमानपि प्रमाणान्तरं कथयितुं न शक्यते। न केवलमेतावदेव; चित्रादिदर्शनमन्तरेणापि यत्र कश्चिदाप्तो ग्रीवादन्तादिपरिमाणविशेषकथनेनैवोष्ट्रं गजं वा बोधयति; तत्र स्थितौ ज्ञानस्य शाब्दत्वमेव मन्यत आचार्यो भासर्वज्ञः।[2]

## उपमानस्य शब्दत्वपक्षे काश्चन विप्रतिपत्तयो तासां निराकरणानि

**( क ) गवयदर्शनात् प्राक् संज्ञासंज्ञिसम्बन्धप्रतिपत्तेरनुपपन्नता** - गवयप्रत्यक्षमन्तरेणाऽऽप्त-वाक्यादेव गवयसंज्ञागवयसंज्ञिनोः सम्बन्धज्ञानं कथमुत्पद्यत इत्याशङ्का निरर्थिकैव। अप्रत्यक्षस्य शक्रस्य विषयेऽपि सम्बन्धप्रतिपत्तिर्भवत्येव। यदि जन्मनः प्रागेव पुत्रादीनां विषये संज्ञाकरणं लोके दृश्यते तर्हि

---

1. ध्यातव्यमेतद् यत् केचन नव्यनैयायिका एतन्मतं न समर्थयन्ति। न्यायसिद्धान्तमुक्तावल्याः किरणावलीटीकायाम् उपमिनोमीत्युपमानप्रतिसन्धानमपि स्वीकृतम्। (द्रष्टव्यम् - ''ननूपमानं न मानान्तरं ... उपमिनोमीतिप्रतीतेर्विषयत्वात्।'' - किरणावलीटीका, ***न्यायसिद्धान्तमुक्तावली*** ; पृष्ठम् 289 ) परमुपमिनोमीति प्रतीतिर्सामान्यलोकानुभवविरुद्धैव प्रतीयते।
2. ध्यातव्यमेतद् यत् नव्यन्याय उपमानस्य विकासः परिलक्ष्यते। उपमानस्य प्रकारत्रयं तत्र प्रदत्तं - साधर्म्योपमानं, वैधर्म्योपमानं धर्ममात्रोपमानं च।। (द्रष्टव्यम् - किरणावलीटीका, ***न्यायसिद्धान्तमुक्तावली*** ; पृष्ठम् 289 अपि ***तार्किकरक्षा;*** पृष्ठम् 53) भासर्वज्ञस्य दृष्टान्तोऽयं धर्ममात्रोपमानमेव वर्तते।

विद्यमानानां गवयादीनां विषये का कथा ? न च 'यथा सहस्रनेत्रवत्त्वेनेन्द्रस्य शक्रसंज्ञा भवति; तथा गवयसंज्ञाया नास्ति किञ्चित् प्रवृत्तिनिमित्तमि'ति शङ्कावकाशः। तत्रापि गोसदृश्यवत्त्वात् गवयस्य संज्ञाकरणं भवति; गोगवयशब्दयोः श्रुतिसम्यात्।

न च 'गवयत्वमेव गवयसंज्ञाप्रवृत्तिनिमित्तं तस्माद् गवयत्वप्रतिपत्तिमन्तरेण गवयसंज्ञाकरणमनुपपन्नमि'ति कथयितुं शक्यते आप्तवाक्यादेव गवयधर्मिणः गवयत्वधर्मस्य चोभयोर्प्रतिपत्तिर्जायते धर्मपूर्वकमेव धर्मिग्रहणात्।

**(ख) उपमितिः शाब्दबोधापेक्षया व्यवस्थितं विशदं च ज्ञानम्** - संज्ञिविशेषावच्छिन्नत्वेनोपमितिज्ञानं शाब्दज्ञानवन्नोपप्लुतमपि तु व्यवस्थितं विशदं च भवति। तस्मादुपमितेः शाब्दत्वमनुपपन्नमिति कश्चिद् मन्यते। परं नेदं मतं क्षोदक्षमम्। 'यथा गौस्तथा गवयः' इत्याद्याप्तवाक्यजनितं सादृश्यज्ञानं नास्ति संशयो विपर्ययो वा; अपितु प्रमैव। यदि नाम शाब्दबोधे गवयादिसंज्ञिविशेषप्रत्यक्षानपेक्षत्वमेवोपप्लवः; तर्ह्यनुमानेन आत्मान्तःकरणाणुधर्माधर्मेत्यादीनामपि ज्ञानान्युपप्लुतानि स्युः तत्रापि संज्ञिविशेषस्याप्रत्यक्षत्वम्। तेषामपि 'अयमात्मा' इत्यादिरूपेण ज्ञानं न जायते; अपि तु 'यत्रेच्छादयः समवेताः, स आत्मा' इत्यादिरूपेण भवति। आप्तवाक्याद् 'गवयोऽयम्' इति रूपेण ज्ञानं न जायते; अपि तु 'यत्र गोसादृश्यं सो गवय' इति रूपेणैव भवति।[1] आप्तवाक्यजन्यमिदं ज्ञानं यद्युपप्लुतं भवेत् तर्ह्यनुमानेनात्मादीनां ज्ञानेषु को विशेषः येन तेषामुपप्लुतत्वं नाभ्युपेयात् ?

**(ग) वाक्यपरिवर्तनेनोपमानस्य सार्थकता** - भवतु नाम 'यत्र गोसादृश्यमस्ति; स गवयः तस्य गवयसंज्ञा वा' - एवंप्रकारकेण कथनेनोपमानस्य प्रमाणान्तरत्वं न प्रतीयेत; परं 'यादृशो गौस्तादृशो गवयः' - इत्येवंप्रकारकेण वाक्येन केवलं सादृश्यप्रतिपत्तिर्भवति; न तु संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः। अतः सम्बन्धज्ञानार्थमुपमानस्य स्वातन्त्र्येणैव प्रमाणत्वमभ्युपेयम्।

भासर्वज्ञानुसारेण यदि वाक्यादेव सम्बन्धज्ञानं न जायते तर्हि वाक्यज्ञानस्य वैयर्थ्य स्यात्। कारणमत्रास्ति यद् वाक्यश्रवणमन्तरेणापि गोस्मृतिसम्पन्नो जनो गवयदर्शनानन्तरं सादृश्यं प्रत्यक्षीकरोत्येव; परमसौ संज्ञासंज्ञिसम्बन्धं न प्रत्येति। अतः स्पष्टमिदं यद् वाक्यादेव सादृश्यज्ञानं सम्बन्धज्ञानं चोभयमेवोत्पद्यते।

वस्तुतस्तु 'यादृशो गौस्तादृशो गवयः'; 'तादृशो गवयसंज्ञकः'; 'तादृशस्य गवयसंज्ञा'- इत्येतेषां सर्वेषां वाक्यानां केवलं शब्दभेदो; न तु कश्चनार्थभेदः। अनेनैव प्रकारेण 'इच्छादिलिङ्ग आत्मा'; 'इच्छादिलिङ्गस्य आत्मसंज्ञा' इत्यादिवाक्यैरपि संज्ञासंज्ञिसम्बन्ध एव प्रतिपाद्यते। यदि युक्तिरियं न स्वीक्रियेत तर्हि 'गोरयम्' - इत्येवंरूपेण सङ्केतिते 'अस्य गोशब्दः संज्ञा' - इत्येवंप्रकारकस्य वाक्यस्यापि प्रमाणान्तरत्वं स्यात्; समानन्यायत्वात्।

---

1. विश्वनाथोऽप्येतन्मतं समर्थयति। (द्रष्टव्यम् - ''तदनन्तरं गवयो गवयपदवाच्य इति ज्ञानं यज्जायते तदुपमितिः। न त्वयं गवयपदवाच्य इत्युपमितिः; गवयान्तरे शक्तिग्रहाभावप्रसङ्गात्।'' - किरणावलीटीका, ***न्यायसिद्धान्तमुक्तावली*** - पृष्ठम् 289 )

**(घ) विशेषप्रतिपत्तय उपमानस्योपयोगित्वम्** - इयमाशङ्का भवितुं शक्यते यद् 'यथा गोस्तथा गवयः' इत्याद्याप्तवाक्यैः गवयादिदर्शनानन्तरपि 'अस्य गवयशब्दः संज्ञा' इत्यादिविशेषप्रतिपत्तिर्न भवति तस्याश्च विशेषप्रतिपत्तेः करणमुपमानमेव; न किञ्चिदन्यत्।

भासर्वज्ञानुसारेण यद्ययं पक्षः स्वीक्रियेत तर्हि 'गौरयम्' इत्यादिवाक्यतोऽपि 'अन्योऽपि एवम्भूतो गौः' इत्यादिज्ञानं भवितुं न शक्येत। तस्य कृतेऽपि भिन्नं प्रमाणं भवेत्। अस्मादतिरिक्ता एकाऽन्या समस्या समुपस्थास्यति यदपरगोपिण्डदर्शने सति पूर्ववाक्यादेव 'अस्य गोशब्दः संज्ञा'– इति प्रतीतिर्न सम्भवेत्। परिणामतः प्रत्येकं गोपिण्डादिविषये संज्ञासंज्ञिसम्बन्धज्ञानार्थं पृथक् प्रमाणं स्वीक्रियेत ततश्चानन्त्यदोषापत्तिः दुर्वारा। अत एवेदं स्वीकार्यं यदुपर्युक्तस्य कस्यचिदपि वाक्यस्य प्रयोगें प्रतिपाद्यमानं जनं प्रति वक्तुः पूर्वोक्ताः सर्वेऽर्था अभिप्रेता भवन्ति।

एकस्यैव कथनस्य अनेकेऽभिप्राया भवितुमर्हन्तीति भूषणकारः कारणद्वयेन प्रदर्शयति –

**(क) प्रस्तावविशेषेण** : लोके प्रस्तावविशेषेणाभिप्रायस्यान्यथात्वे सत्यप्यन्यथोक्तेः प्रयोगः दृश्यते। यथा रिपोः गृहे भोजनस्य निन्दातिशयं प्रदर्शयितुं कश्चित् कथयति – "विषं भुङ्क्ष्व, माऽस्य गृहे भुङ्क्ष्व।" अनयाऽन्यथोक्त्या प्रतिपाद्यमानोऽपि जनो वक्तुरभिप्रायमवगच्छति।[1]

**(ख) सामर्थ्येन** : सामर्थ्यस्यानेकेऽर्थाः भवन्ति – अर्थापत्तिः, प्रतिभा, ऊहः, शक्तिश्च। एतेषु केनाप्यर्थेनैकस्यैव वाक्यस्यानेकेऽभिप्रायाः प्रतीयन्ते। यथा 'यादृशो गौस्तादृशो गवयः' इत्यनेन वाक्येन 'गोसदृशस्य गवयसंज्ञा' इत्यभिप्रायोऽर्थापत्त्या ज्ञायते। एवंप्रकारेणान्यसामर्थ्येन 'गौरयम्' इति सङ्केतिते 'एवम्भूतस्य सर्वस्य गोसंज्ञा' इत्यभिप्रायो लभ्यते।

वस्तुत एवंप्रकारेण दीर्घविवेचनेन भासर्वज्ञस्येदमेव तात्पर्यं वर्तते यदाप्तवाक्यस्य स्वरूपं यत्किञ्चिदपि भवेत्; परन्तु ततो बहवोऽभिप्रायाः प्रतीयन्ते। 'यथा गौस्तथा गवयः' इत्याद्याप्तवाक्यसंस्कारयुतो जनो यदा गवयादिकं पश्यति; तदा तत्र संज्ञासंज्ञिसम्बन्धप्रतिपत्तिर्न जायते; आप्तवाक्यश्रवणकाल एव तद्ग्रहणात्। गवयादिदर्शनकाले तु जायमानं संज्ञासंज्ञिसम्बन्धज्ञानं स्मृतिरूपमेव गृहीतग्राहिज्ञानत्वात्। अनेन विधिना प्राचीनन्यायसम्मतस्योपमानस्यान्तर्भाव आगमप्रमाणे कर्तुं शक्यते।

अत्रैकः पक्षो भूषणकारेण स्पष्टतया न परिचर्चितम्। यद्यप्यतिदेशवाक्येनैव संज्ञासंज्ञिसम्बन्धप्रतिपत्तिर्भवति। गवयादिदर्शनकाले जायमानं 'गवयोऽयम्' इति ज्ञानं यद्यपि स्मृतिरूपमेव; तथापि ज्ञानस्यास्य प्रामाण्यं तु गवयादिदर्शनोपरान्तमेव सम्भवति।[2] अत एव ज्ञानस्य सम्पूर्णतायामातिदेशवाक्यादतिरिक्तस्य संज्ञिदर्शनस्यापि महती भूमिका वर्तते; तदन्तरेण ज्ञानस्य फलपर्यवसायित्वाभावात्।

1. वस्तुतोऽभिधाव्यतिरिक्ते लक्षणाव्यञ्जने शब्दवृत्ती; याभ्यां विभिन्ना अर्था उपस्थाप्यन्ते। नैयायिका व्यञ्जनावृत्तिं न मन्यन्ते।
2. ज्ञानस्य प्रामाण्यस्थापनविधी रसायनविज्ञानस्य निश्चायकपरीक्षणेन (कन्फर्मेट्री टेस्ट इत्याङ्लभाषायाम्) सह तुलनीयः।

**सूत्रविरोधपरिहारः**

भासर्वज्ञानुसारेण 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'[1] इत्यस्य सूत्रस्याभिप्रायः परवर्तिभिराचार्यैः सम्यक्प्रकारेण नावबुद्धः। वस्तुतस्तु सूत्रकृदभिप्रायो प्रमाणत्रित्वमेवासीत्। उपमानस्य पृथगभिधानं तु प्रयोजनविशेषेण कृतम्।

भासर्वज्ञः सूत्रकारस्य प्रथमसूत्रं दृष्टान्तत्वेनोपस्थाप्य स्वपक्षं पुष्णाति। सूत्रेऽस्मिन् निःश्रेयसप्राप्तये तत्त्वज्ञानस्य विषयाणां षोडशपदार्थानामुद्देशः कृतः 'प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्त-अवयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः'[2] इति। अत्रापि यद्यपि दृष्टान्तः हेत्वाभासश्च क्रमेण प्रमेये निग्रहस्थाने चान्तर्भूतौ[3]; तथापि प्रयोजनवशात् तयोः पृथगुद्देशः कृतः।

अत्रावधेयं यन्न्यायभूषणे पदपञ्चिकायां च दृष्टान्तः प्रमाणान्तर्भूतः कथितः। परं न्यायभाष्यन्यायवार्त्तिकेत्यादिग्रन्थेषु स्पष्टतया दृष्टान्तस्य प्रमेयत्वं विधाय तत्पृथगभिधानस्य कारणं निरूपितम्। यतो हि पञ्चावयवात्मकवाक्यसमूहरूपस्य न्यायस्य मूलं दृष्टान्त एव; अतस्तथ्यमिदं ज्ञापयितुं दृष्टान्तस्य पृथगभिधानं वर्तते।[4] अस्मिन् प्रकरणविशेषे विषयान्तरभयाद् बिन्दुरयं न विस्तीर्यते।

**पूर्वपक्षः** - विभागसूत्रैरेव सङ्ख्याविप्रतिपत्तिर्निराक्रियते; न तूद्देशसूत्रैः। दण्डकाख्यं प्रथमसूत्रमेकमुद्देशसूत्रं वर्तते।[5] अत एव भूषणकारप्रदत्तः सूत्रदृष्टान्तोऽनुपपन्नः।

**उत्तरपक्षः** - भासर्वज्ञानुसारेण विभागसूत्राणां न्यूनाधिकसंख्याव्यवच्छेदार्थत्वमनुपपन्नं व्यभिचारदोषवत्त्वात्। इन्द्रियाभिधानकारि 'घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः[6] इति सूत्रमपि विभागसूत्रमेव। अत्र केवलं पञ्चानामिन्द्रियाणामुल्लेखः; परं न्यायदर्शने मन अपि षष्ठेन्द्रियत्वेनाभिमतम्। भासर्वज्ञेन न्यायभूषणस्य प्रत्यक्षपरिच्छेदेऽस्मिन् विषये स्वविचारः स्पष्टतया व्यक्तः 'तस्माद्यथेन्द्रियाणां न्यूनत्वमेवाशङ्क्य सूत्रकृता निराकृतमित्यधिकत्वाभ्युपगमो न विरुध्यते, तथा प्रमाणानामधिकत्वमेवाशङ्क्य निराकृतमित्यतस्त्रैविध्याभ्युपगमो न विरुध्यते; न्यायलभ्यत्वस्योभयत्रापि समानत्वात्।'[7] इति।

---

1. ***न्यायसूत्रम्*** ; 1.1.3
2. ***न्यायसूत्रम्;*** 1.1.1
3. अस्मिन्नेव सूत्रेऽन्येषां बहूनां पदार्थानामुद्देशः कृतः; येऽन्यपदार्थेष्वन्तर्भूताः। यथा निर्णयः प्रमाणं सन्नपि पृथगुल्लिखितः। भासर्वज्ञेन केवलं केषाञ्चिदेव पदार्थानां दृष्टान्ताः प्रदत्ताः।
4. "सोऽयं दृष्टान्तः प्रमेयम्; उपलब्धिविषयत्वात्। तस्य पृथगुपदेशो; न्यायस्य तन्मूलत्वात्।" - ***न्यायसूत्रम्;*** .1.1.1 इत्यस्योपरि ***न्यायवार्त्तिकम्;*** पृष्ठम् 47.
5. दण्डवद् दीर्घत्वात् प्रथमसूत्रं दण्डकसूत्रमिति कथ्यते।
6. ***न्यायसूत्रम्;*** 1.1.12
7. ***न्यायभूषणम्;*** पृष्ठम् 21.

एवमेव जातिसूत्रं निग्रहस्थानसूत्रं च यद्यपि विभागसूत्रे; तथापि ते सङ्ख्याकथनं न कुरुतः।[1] तत्रापि परस्परान्तर्भूतानां पदार्थानां पृथगभिधानं प्रयोजनविशेषेण कृतम्।

**उपमानस्य पृथगभिधानस्य प्रयोजनम्**

भूषणकारानुसारेण 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'[2] इत्यस्मिन् सूत्रे शब्दान्तर्भूतमप्युपमानं पृथक्तया किमर्थमभिहितम्? अस्य कारणमस्ति शब्दप्रामाण्यसमर्थनम्।[3] 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्'[4]; 'न, कर्मकर्तृसाधनवैगुण्यात्'[5] चेत्यादिसूत्रेषु शब्दप्रामाण्यसमर्थनं कृतं; परं तत्रोपमानं किं नोल्लिखितं वर्तत इति शङ्कायाः निवारणाय भासर्वज्ञः कथयति यत् तैः सूत्रैरनृतत्वादिदोषाणां परिहारेण शब्दप्रामाण्यं समर्थितम्। उपमानस्य पृथगुल्लेखस्त्वन्यप्रकारस्याक्षेपस्य निराकरणाय वर्तते। अस्य स्वरूपमेवं वर्तते –

**(क)** प्रमाणविप्लववादिनां बौद्धानां मतानुसारेण यदि शब्दप्रमाणविषयः प्रत्यक्षानुमानविषयं नातिरिच्यते; तर्हि तद्विषयं प्रति शब्दस्यानुवादकत्वमेव[6]; न तु प्रामाण्यम्।

**(ख)** यदि शब्दप्रमाणविषयः प्रत्यक्षानुमानविषयेभ्यो भिन्नः ; तर्हि तस्य प्रत्यक्षानुमानाभ्यामग्रहणात् पदपदार्थसम्बन्धग्रहणमपि न भवेत्। ततः पदस्य पदार्थवाचकत्वमेव न स्यात्। पदेन पदान्तरेण वापि पदार्थज्ञानं न सम्भवेत्, पदपदार्थसम्बन्धग्रहण एव पदस्य पदान्तरस्य वा पदार्थवाचकत्वात् । सम्बन्धसिद्ध्या पदार्थज्ञानं; पदार्थज्ञानेन च सम्बन्धसिद्धिरितीतरेतराश्रयदोषः। शक्रादिपदान्तरेणापीन्द्रपदार्थस्य ज्ञानं सम्भवेदिति पक्षे न केवलमितरेतराश्रयत्वदोषोऽपित्वानन्त्यदोषोऽपि प्रसज्येत। इन्द्रपदार्थज्ञानाय शक्रपदं, शक्रपदार्थज्ञानाय पुरन्दरादिपदं, पुरन्दादिपदार्थज्ञानाय वृत्रहापदं चेत्यनन्तपदानामावश्यकता भवेत्।

वाक्येनापि पदार्थप्रसिद्धिरनुपपन्ना; वाक्यार्थस्यापि प्रसिद्धार्थानां पदानामन्वयमात्रत्वात्। तथ्यमिदं 'प्रसिद्धार्थपद' इत्यस्य समासविग्रहद्वयेनापि स्पष्टीकृतम् –

**(क)** प्रसिद्धाश्च तेऽर्थाश्च प्रसिद्धार्थास्त एव पद्यन्ते इति पदानि। तेषामन्वयमात्रं वाक्यार्थः।

**(ख)** प्रसिद्धा अर्था येषां, तानि प्रसिद्धार्थानि, पद्यन्त एभिरिति पदानि, तेषामन्वयमात्रं वाक्यमेवार्थो वाक्यार्थः।[7]

---

1. ***न्यायभूषणम्;*** पृष्ठम् 356 – 357.
2. ***न्यायसूत्रम्;*** 1.1.1
3. "शब्दप्रामाण्यसमर्थनं प्रयोजनम्।" – ***न्यायभूषणम्;*** पृष्ठम् 423.
4. ***न्यायसूत्रम्;*** 2.1.68
5. ***न्यायसूत्रम्;*** 2.1.58
6. "अनुवादकत्वं प्रमाणान्तरगृहीतविषयत्वं, तच्च स्मृतिवदप्रमाणं स्यादित्यर्थः।" – ***न्यायसारपदपञ्चिका;*** पृष्ठम् 75.
7. ***न्यायभूषणम्*** ; पृष्ठम् 423.

एवंप्रकारेण वाक्यार्थस्य स्थितिद्वय एव शब्दप्रामाण्यमसिद्धं भवति।

भूषणकारानुसारेणोपर्युक्तस्य पर्यनुयोगकण्टकस्योद्धाराय शब्दान्तर्भूतस्याप्युपमानस्य पृथगभिधानमनिवार्यमेवासीत् सूत्रकृते गौतमाय। प्रत्यक्षानुमानविषयत्वेऽपि शब्दस्यानुवादकत्वमनुपपन्नम्। प्रमाणसम्प्लववादानुसारेणैकस्यैव विषयस्य ग्रहणमनेकैः प्रमाणैः भवितुं शक्यते।[1] प्रत्यक्षादिगृहीतेऽप्यर्थे प्रकरणादिसहकारित्वेन शब्दस्य विशिष्टार्थप्रत्यायकत्वं भवत्येव। तस्मात् शब्दस्याज्ञातार्थज्ञापकत्वमक्षुण्णमेव।

यथा प्रत्यक्षानुमानाभ्यामगोचराणां गवयादीनां विषये प्रसिद्धगवाद्युपमानैरुपमानवाक्येन संज्ञासंज्ञिसम्बन्धप्रतीतिः अर्थात् पदपदार्थसम्बन्धप्रतीतिः कार्यते; तथैव केनचिदप्यन्यनिमित्तेन शक्रादिपदपदार्थसम्बन्धप्रतीतिरपि। अत एव प्रत्यक्षानुमानाभ्यामगोचराणां गवयादीनां विषये पदपदार्थसम्बन्धप्रतीतिर्न भवितुमर्हतीति मतं न चतुरश्रमिव लक्ष्यत उपमानादिभिरपि तत्सम्भवात्। अस्यैव तथ्यस्य सिद्धय उपमानस्य पृथक्त्वेन निरूपणमनिवार्यमासीदिति सूत्रविरोधः परिह्रियते।

**न्यायसूत्रैरेवोपमानस्य प्रमाणान्तरत्वासिद्धिः**

भासर्वज्ञानुसारेण गौतमसूत्रेष्वेवोपमानस्य शब्दप्रमाणान्तर्भूतत्वस्य प्रभूताः सङ्केताः प्राप्यन्ते। एतेषां क्रमेणोल्लेखः क्रियते –

**(क) उपमानलक्षणसूत्रेणैवोपमानस्य शब्दात्मकत्वम्** – उपमानस्य पृथगभिधानप्रयोजनं शब्दान्तर्भूतत्वं च सारल्येनावगन्तुमेवोपमानस्य लक्षणं प्रदत्तं वर्तते – 'प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्'[2] इति। भासर्वज्ञेन सूत्रमिदं प्रकारद्वयेन व्याख्यातं यत उपमानस्य शब्दत्वं सिद्ध्यति –

1. प्रसिद्धात् प्रज्ञातात् साधर्म्यान्निमित्ताद् यद्वाक्यं निष्पद्यते यथा गौस्तथा गवय इत्यादिकं, तदेव साध्यसाधनमुपमानं साध्यस्य संज्ञासंज्ञिसम्बन्धस्य साधनं ज्ञापकम्।

2. संज्ञासंज्ञिसम्बन्धविषयज्ञानं साध्यं, तस्य साधनं निष्पादकं वाक्यमुपमानम्।

लोकेऽपि तदेव वाक्यमुपमानमुच्यते येनोपमीयते। अत उपमानं शब्दरूपमेव।

**(ख) परीक्षासूत्रैरप्युपमानस्य शब्दात्मकत्वम्** – परीक्षासूत्रेषु प्रथमतः पूर्वपक्षः स्थापितः – 'अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः'[3] इति। पुनः 'प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः'[4] इत्यनेन उत्तरपक्षसूत्रेण पूर्वपक्षशङ्काऽपास्ता।[5] अनयोपमानपरीक्षयाऽपि तस्य शब्दरूपत्वमेव सिद्धं भवति।

---

1. न्यायभूषणस्य प्रत्यक्षपरिच्छेदे सिद्धान्तोऽयं स्थापितः। (द्रष्टव्यम् ***न्यायभूषणम्*** ; पृष्ठ 81.)
2. ***न्यायसूत्रम्;*** 1.1.6
3. ***न्यायसूत्रम्;*** 2.1.44
4. ***न्यायसूत्रम्;*** 2.1.45
5. भासर्वज्ञोऽत्रैतानि समस्तान्युदाहरणानि पूर्वोक्तसूत्राणां न्यायभाष्यादेवोद्धरति। अतस्तेषां सविस्तरमुल्लेखोऽत्र न कृतः।

शब्दान्तर्भूतस्योपमानस्य पृथक्परीक्षाऽनुपपन्ना शब्दपरीक्षयैव तस्यापि परीक्षायाः सम्पादितत्वादित्याशङ्का चेत्; तन्न; प्रमाणभूतमपि प्रमाणविशेषेऽन्तर्भावज्ञापनमेव पृथक्परीक्षाया उद्देश्यं वर्तते। तर्केऽस्मिन्नर्थापत्तिपरीक्षैव समीचीनो दृष्टान्तः।[1] कस्यचित् प्रमाणस्य पृथगुद्देशप्रयोजनमपि पूर्णसाफल्यं तदैवैति यदा तस्य परीक्षाऽपि पृथक्त्वेन क्रियते। अत एवोपमानस्य पृथक्परीक्षाऽपि प्रयोजनवती।

**(ग) उपमानस्यानुमानरूपत्वमेव प्रतिषिद्धं; न त्वागमरूपत्वम्** – उपमानमप्यनुमानमेव; अनुमानमिव तस्मिन्नपि प्रत्यक्षार्थेन परोक्षार्थसिद्धिर्भवति – 'प्रत्यक्षेणाप्रत्यक्षसिद्धेः'[2] इत्याशङ्कोत्तरवर्तिना सूत्रद्वयेन निवारिता। एते सूत्रेऽनुमानोपमानयोः साम्यप्रतीतावपि तयोर्महद्वैलक्षण्यं प्रतिपादयतः। तयोः प्रतिपादिताः तर्का अत्रोल्लिख्यन्ते।

1. उपमानेऽप्रत्यक्षगवयादेः प्रत्यक्षमपेक्षितं; परमनुमानेऽप्रत्यक्षधूमादेः प्रत्यक्षमनपेक्षितम्।[3]

2. उपमानस्याप्तप्रामाण्यबलेन परोक्षार्थसाधकत्वं परमनुमानस्याविनाभावबलेन।

3. परार्थानुमानसन्दर्भे अनुमानवाक्यमिवोपमानवाक्यं न केवलं परप्रत्ययार्थ भवति; यतो हि वक्तुरपि 'यथा गौस्तथा गवय' इत्यध्यवसायो भवति। इदमपरं तथ्यं वर्तते यद् वक्त्रध्यवसायो नास्त्युपमानम्।

4. अनुमानवाक्यवदुपमानवाक्ये पक्षधर्मताकथनं न भवति। अस्मादतिरिक्तमनुमाने 'यत्र यत्र धूमस्तत्र तत्र वह्निः' इति व्याप्तिवाक्यरूपं 'यथा धूमस्तथा वह्निः' इत्युपमानस्यातिदेशवाक्यरूपवद् न भवति।[4]

उपर्युक्तेषु सूत्रेषु तद्भाष्येषु चोपमानस्यानुमान एवान्तर्भावो निषिद्धः; न तु आगमे। अस्मादतिरिक्तं पौनःपुन्येन तस्य वाक्यरूपत्वमेव स्पष्टीकृतं यतस्तस्य शब्दप्रमाणरूपत्वमेव सिद्ध्यति।

## चतुष्ट्वपरीक्षाविरोधपरिहारः

प्रमाणसङ्ख्याविषयकामाशङ्कां सूत्रकारः पूर्वपक्षसूत्ररूपेणोपस्थापयति – 'न चतुष्ट्वमैतिह्यार्थापत्ति-सम्भवाभावप्रामाण्याद्'[5] इति। पुनः तस्याः समाधानं सूत्रयति – 'शब्दे ऐतिह्यानर्थान्तरभावादनुमानेऽर्था-पत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः'[6] इति। भासर्वज्ञानुसारेण पूर्वोक्तसूत्रे प्रमाणाधिक्यमेव पूर्वपक्षीकृतम्। अतस्तत्र 'न चतुष्ट्वम्...' इतीदं कथनं पञ्चत्वाद्याशङ्काया निवारणार्थं; न तु त्रित्वप्रतिषेधार्थम्।

---

1. "अनर्थापत्तावर्थापत्त्यभिमानात्।" – ***न्यायसूत्रम्*** ; 2.2.4
2. ***न्यायसूत्रम्***; 2.1.46
3. "नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामः।" – ***न्यायसूत्रम्*** ; 2.1.47
4. "तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः।" – ***न्यायसूत्रम्*** ; 2.1.48 तद्भाष्यं च।
5. ***न्यायसूत्रम्***; 2.2.1
6. ***न्यायसूत्रम्***; 2.2.2

स्वयुक्तेः समर्थने भासर्वज्ञः इन्द्रियसङ्ख्यापरीक्षासूत्राणि[1] दृष्टान्तत्वेनोपस्थापयति। यथा तेषु सूत्रेष्विन्द्रियपञ्चत्वपरीक्षायास्तात्पर्यं न्यूनत्वप्रतिषेधेन वर्तते; तथैवात्रापि चतुष्ट्वपरीक्षायास्तात्पर्यमाधिक्य-प्रतिषेधेन। यद्येवं न स्वीक्रियेत तर्हीन्द्रियाणां संख्या पञ्च स्यात्। ततः न्यायाभिमतमिन्द्रियषट्त्वं विरुद्ध्यते। यदि षोडशपदार्थानां चतुर्विंशतिजातीनां च परस्परान्तर्भूतत्वेऽपि पृथगभिधानं भवितुमर्हति; तर्हि सूत्रोल्लेखमात्रत्वेन प्रमाणचतुष्टयस्य स्वीकारः केन विधिना क्षोदक्षमः?

यथा सिद्धान्तपक्षसूत्रेष्वैतिह्यादीनां शब्दादिष्वन्तर्भावः प्रदर्शितस्तथोपमानस्य शब्देऽन्तर्भावः किमर्थं न प्रदर्शित इत्याशङ्का मास्तु। भूषणकारस्यानुसारेण सूत्रकारस्य स्वभावोऽयं यदसौ समग्रसिद्धान्तं शब्दशः न कथयति; अपि त्वतिशयतर्कशक्तिसम्पन्नशिष्याणां विवेकायापि किञ्चिज्जहाति।[2] इन्द्रियषट्त्वमतिरिच्यावयविनिराकरणविषयकाणां शब्दनित्यताविषयकाणां च कतिपयानां सूत्राणां माध्यमेन भासर्वज्ञः सूत्रकारस्यामुमेव स्वभावं स्पष्टीकरोति।[3]

प्रदीपकल्पानां प्रमाणानां यत्नेन प्रतिपादने सूत्रकारस्यायमेवाशयो वर्तते यद् येषां विवेचनं नोपलभ्यते; तेषामनुक्तविषयाणामवबोधः प्रमाणैरेतैः परीक्ष्यैव कर्तव्यः। कारणमस्येदं वर्तते यद् यदि सूत्रोक्तानि तथ्यानि यथावत् स्वीक्रियेरन्; तर्हि तेषां परीक्षा निरर्थिका एव स्युः। सूत्रकारस्यैतावद् विचारस्वातन्त्र्यं विद्यते यदसौ स्वसिद्धान्तान् परीक्ष्यैव स्वीकर्तुमुपदिशति। भासर्वज्ञेन कृतया परीक्षयोपमानस्य शब्दप्रमाणरूपत्वमेव सिद्ध्यति।

उपर्युक्तेन विवेचनेन तथ्यमिदमाविर्भवति यत् भासर्वज्ञस्य कृते न्यायदर्शनस्य सामान्यविचारधारां विहायोपमानस्य शब्दप्रमाणत्वं स्थापयित्वा प्रमाणत्रित्वसिद्धिरत्यन्तं साहसपूर्णं कार्यमासीत्। तस्मादेव कारणात् न्यायशास्त्रेऽसौ तादृशं सम्मानं न प्राप्तवान् यादृशस्य सम्मानस्यासावधिकारी। सूत्रकारमनवमान्य तस्य प्रमाणविषयकसूत्राणां नवीनं व्याख्यानं भासर्वस्य महत्युपलब्धिर्वर्तते। पाशुपतसम्प्रदाय आत्मनः श्रद्धामसौ हातुं न शक्नोति। अत एव न्यायदर्शनेऽपि पाशुपतानां प्रमाणविषयकान् मोक्षविषयकान् च विचारानादधातुं सः सातत्येनोद्यतः। सत्यं त्विदमस्ति यत् भासर्वज्ञ एतादृश आचार्यो वर्तते यस्य कृते सत्यानुसन्धानमेव सर्वप्रमुखं; न तु येन केन प्रकारेणाभ्युपगमरक्षा।

---

1. "इन्द्रियार्थपञ्चत्वात्।" (***न्यायसूत्रम्*** ; 3.3.56) इति सूत्रे तत्परवर्तिसूत्रेषु चेन्द्रियसंख्यापरीक्षा कृता।
2. "शीलमिदमस्य भगवतः सूत्रकारस्य बहुष्वधिकरणेषु द्वौ पक्षौ न स्थापयति, शास्त्रसिद्धान्तात् तत्त्वं प्रतिपत्तुमर्हतीति न्यते। शास्त्रसिद्धान्तस्तु न्यायसमाख्यातमर्थगतं बहुशाखमनुमानमिति"। - ***न्यायसूत्रम्*** ; 2.2.17 इत्यस्य *न्यायभाष्यतः* भूषणकारेण पङ्क्तिरियमुद्धृता।
3. विस्तारभयात् तेषामुल्लेखोऽत्र न क्रियते।

## सन्दर्भग्रन्थसूची

**मूलसंस्कृतस्रोतांसि**

1. उद्योतकरः. *न्यायवार्त्तिकम्* . (सं.) विन्ध्येश्वरी प्रसाद द्विवेदी. वाराणसी : चौखम्भा प्रकाशनम्, 1915.
2. गौतमः . *न्यायदर्शनम्* (न्यायसूत्र-न्यायभाष्य-न्यायवार्त्तिक-न्यायवार्त्तिकतात्पर्यटीका- वृत्तिसहितम्). (सं.) तारानाथन्यायतर्कतीर्थोऽमरेन्द्रमोहनन्यायतर्कतीर्थश्च. देहली : मुंशीराम मनोहरलाल पब्लिशर्स, 1985.
3. भट्टराघवः . *न्यायसारविचारः* . (सं.) उमारमणो झाः . जम्मुः : श्रीरणवीरकेन्द्रियसंस्कृत- विद्यापीठम्, 1976.
4. भासर्वज्ञः. *न्यायभूषणम्*, (सं) स्वामियोगीन्द्रानन्दः . वाराणसी : षड्दर्शनप्रकाशनप्रतिष्ठानम्, 1968.
5. भासर्वज्ञः. *न्यायसारः* (जयसिंहकृतन्यायतात्पर्यदीपिकासहितः) . (सं) सतीशचन्द्रः विद्याभूषणः . कालिकाता : एशियाटिकसोसाइटी, 1910.
6. भासर्वज्ञः. *न्यायसारः* (वासुदेवकृतपदपञ्चिकासहितः) . (सं) वी.एस्. अभयङ्करः सी.आर.देवधरश्च . पुणे : के. आर. गोन्धलेकर, 1922.
7. भासर्वज्ञः . *न्यायसारः* (अपरार्कदेवकृतन्यायमुक्तावली--आनन्दानुभवाचार्यकृत- न्यायकलानिधिसहितः) . (सं) एस्. सुब्रह्मण्यशास्त्री वी.सुब्रह्मण्यशास्त्री च. मद्रपुरी : गवर्न्मेण्ट मैनुस्क्रिप्ट लाइब्रेरी, 1961.
7. मिश्रः, वाचस्पतिः . *सांख्यतत्त्वकौमुदी.* वाराणसीः चौखम्भा संस्कृत सिरीज, 1929.
8. वरदराजः . *तार्किकरक्षा.* (सं) सम्पत्कुमाराचार्यः . तिरुपतिः : हरिप्रियाप्रकाशनम्, 2006.
9. विश्वनाथतर्कपञ्चाननः . *न्यायसिद्धान्तमुक्तावली.* (सं) कृष्णवल्लभाचार्यः . वाराणसीः चौखम्भा संस्कृत संस्थानम्, 1995.

**अन्यस्रोतांसि**

1. चटर्जी, सतीशचन्द्रः . दी *न्याय थ्योरी ऑफ नॉलेज.* कालिकाता : कालिकाताविश्वविद्यालयः, 1950.
2. तर्कवागीशः, फणिभूषणः . *न्याय-परिचय.* वाराणसी : चौखम्भा विद्याभवन, 1968.
3. दत्तः, धीरेन्द्रः मोहनः . *सिक्स वेज़ ऑफ नोइङ्ग.* कालिकाता : कालिकाताविश्वविद्यालयः, 1960.
4. नारायणः, टी.के. *न्यायसार ऑफ भासर्वज्ञ.* नवदेहली :मित्तल पब्लिकेशन्स्, 1992.
5. भारतीयः, महेशः . *भारतीय दर्शन की प्रमुख समस्याएँ* . गाज़ियाबादनगरम्ः इण्डो विज़न प्रा.लि., 1999.
6. सुथारः, गणेशीलालः . द *न्यायसार ऑफ भासर्वज्ञ-ए क्रिटिकल एण्ड एनालिटिकल स्टडी* . अहमदाबादनगरम् : एल्.डी. इन्स्टिट्यूट ऑफ इण्डोलॉजी, 1991.
7. शर्मा, लक्ष्मीः . *उपमान प्रमाण : एक तुलनात्मक अध्ययन.* देहली : दिल्लीविश्वविद्यालयः, 1992.

ISSN - 0974-8946
अप्रैल-जून 2018

शोधप्रभा
वर्षः 43, द्वितीयाङ्कः

# दर्शनेषु अनैकान्तिकहेत्वाभासविचारे मतभेदः

श्रीयशवन्तकुमारत्रिवेदी*

चार्वाकातिरिक्त सर्वेपि दार्शनिकाः अनुमानस्यापि प्रमाणत्वं स्वीकृतवन्तः, अनुमाने यथा व्याप्तिपक्षधर्मताविशिष्टसद्धेतुज्ञानं तत्त्वनिर्णयविजयप्रयोजकत्वात् आवश्यकं तथैव व्याप्तिपक्षधर्मत्वाभाववति असद्धेतोः ज्ञानमप्यावश्यकम्, अत एव चिन्तामणिकारैः उक्तं यत् ''अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरुप्यन्ते।''[1] अत्र एका जिज्ञासा समुत्पद्यते यत् असद्धेतोः ज्ञानं कथं तत्त्वनिर्णयविजयप्रयोजकत्वमस्ति, तदुच्यते यत् यदा ''वह्निव्याप्यधूमवानयं पर्वतः'' इति परामर्शदशायां ''वह्न्यभावव्याप्यजलवानयं पर्वतः'' इति परामर्शोत्पद्यते चेत् तर्हि ''पर्वतो वह्निमान्'' इत्युनमितिः नोत्पद्यते, अस्मिन् स्थितौ यदि प्रत्यक्षेण पर्वते जलाभावस्य दर्शनं जायते तदा जलाभाववति पर्वते जलज्ञानमप्रामाण्यम् इति अप्रामाण्यग्रहो भवति, एवं परामर्शे यदि अप्रमाण्यग्रहो भवति चेत् विपरीतपरामर्शे अप्रामाण्यज्ञानाभाववैशिष्ट्याभावात् न हि प्रतिबन्धकत्वं, तदा तु पर्वतोद्देश्यक-वह्निविधेयिकानुमितिरुत्पद्यते, अतः प्रमितकोटिरुपतत्त्वज्ञानं प्रमात्मकज्ञानमपि हेत्वाभासेन भवति अथ च वादिना उपस्थापिते हेतौ दोषोद्भावनद्वारा विजयमपि भवति।

तस्य लक्षणत्रयं गंगेशेन तत्त्वचिन्तामणौ उक्तं यत् ''अनुमितिकारणीभूताभाव-प्रतियोगियथार्थज्ञानविषयत्वं, यद्विषयकत्वेन लिंगज्ञानस्य अनुमितिप्रतिबन्धकत्वं तत्त्वं, ज्ञायमानं, सदनुमितिप्रतिबन्धकत्वं तत्त्वमिति।''[2] लक्षणत्रयेऽपि अनुमितिपदेन समूहालम्बनात्मकः साध्यव्याप्यो हेतुः, हेतुमाँश्चायं पक्षः विवक्षितः, तेन साक्षाद् पक्षविशेष्यकसाध्यप्रकारिकानुमितेः अप्रतिबन्धकत्वेऽपि व्याप्तिपरामर्शयोः प्रतिबन्धकत्वात् व्यभिचार-असिद्ध-विरुद्धानामपि संग्रहः, आचार्यमते तु लिंगोपहित लैंगिकभानमेव अनुमितेः स्वरूपं स्वीकृतम् अतः तेषामपि संग्रहः।

हेत्वाभासानां संख्याविषये बहुधा विप्रतिपत्तिः दृश्यते, जैनमते तावत् असिद्धवि-रुद्धानैकान्तिकाकिंचित्कराः चतुः संख्यकाः हेत्वाभासाः स्वीकृतम्।

बौद्धमते तु नैयायैकापेक्षया संख्याविषये वैलक्षण्यं नास्ति क्रमविषयेऽथ च स्वरुपविषये तु वैलक्षण्यं दरीदृश्यते।

---

* शोधच्छात्रः, विशिष्टसंस्कृताध्ययनकेन्द्रम्, जे.एन.यू. नवदेहली

1 सामान्यनिरुक्तिः, उपाध्याय गंगेशः, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, 1998

2 सामान्यनिरुक्तिः, उपाध्याय गंगेशः, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, 1998

जयतीर्थेन प्रमाणपद्धतौ सप्तविधहेत्वाभासानां विवेचनं कृतम्। ''ते च असिद्ध-विरुद्ध-अनैकान्तिक-अनध्यवसित-कालात्ययापदिष्ट-सत्प्रतिपक्ष-प्रकरणसमाः।''[1] ऐतिहासिकदृष्ट्या सर्वप्रथमं हेत्वाभासस्य विवेचनं वैशेषिकसूत्रे उपलभ्यते यथा- ''अप्रसिद्धोऽनपदेशो असन् सन्दिग्धश्चाऽनपदेशः''[2] इति त्रय एव हेत्वाभासाः स्वीकृताः किन्तु वृत्तिकारमते सूत्रस्थ च ग्रहणसामर्थ्यात् बाधसत्प्रतिपक्षयोरपि हेत्वाभासत्वम् अभ्युपगतम्।

सप्तपदार्थीकारेण तु असिद्ध-विरुद्ध्-अनैकान्तिक-अनध्यवसित- कालात्ययापदिष्ट-प्रकरणसमानां षण्णां हेत्वाभासत्वं प्रतिपादितमिति, भासर्वज्ञेनापि एतेषामेव षण्णां हेत्वाभासत्वम् अभ्युपगतमिति, उक्तं च ''ते चानेकप्रकाराः असिद्ध-विरुद्ध्-अनैकान्तिक-अनध्यवसित-कालात्ययापदिष्ट-प्रकरणसमाः''[3] अनयोः मते अनध्यवसितनामक एकोऽधिको हेत्वाभासोऽस्ति।

एवमेव क्रमविषयेऽपि मतभेदः दृश्यते यथा गौतमेन क्रमोपदर्शितं यत् ''सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसम-कालातीताः हेत्वाभासाः''[4] तत्क्रमो चतुर्ग्रन्थिकायां विद्यते किन्तु तदुत्तरवर्ति कारिकावल्यां तर्कभाषायां च भिन्नक्रमो दृश्यते यथा कारिकावल्यां विश्वनाथेनोक्तं यत् ''अनैकान्तो विरुध्दश्चाप्यसिद्धः प्रतिपक्षितः, कालात्ययापद्दिष्टश्च हेत्वाभासास्तु पंचधा।''[5] किन्तु कारिकाव्याख्यानावसरे सूत्रक्रम एव स्वीकृतः। अतः वक्तुं शक्यते यत् छान्दभङ्गभयादेव क्रमभेदः कारिकावल्यां कृतमिति, न्यायकलिकायामपि सूत्रादन्यक्रममनुसृत्य जयन्तेनोक्तं यत् ''असिद्ध-विरुद्ध-अनैकान्तिक-कालात्ययाप्दिष्ट-प्रकरणसमाः'' इति।[6]

न्यायदर्शने प्रायशः व्यभिचारस्यैवं प्राथम्यं दृश्यते, तल्लक्षणविचारावसरे महर्षिगौतमेनोक्तं यत् ''अनैकान्तिकः सव्यभिचारः''[7] अत्र अनैकान्तिकेत्यस्य व्युत्पत्तिस्तावत् न्यायभाष्ये कृतं यत् ''एकस्मिन्नन्ते विद्यते इति एकान्ते नियतः ऐकान्तिको विपर्ययादनैकान्तिकः उभयान्ताव्यापकत्वादिति''[8] अत्र चानैकान्तिक सव्यभिचारशब्दौ पर्यायौ पुरुषभेदापेक्षया लक्ष्यलक्षणत्वेनावस्थितौ, यस्य पुरुषस्य अनैकान्तिकपदार्थज्ञानं नास्ति सव्यभिचारपदार्थज्ञानमस्ति चेत् सव्यभिचार लक्षणं लक्ष्यं च अनैकान्तिकः, एवमेव यस्य सव्यभिचारपदार्थज्ञानं नास्ति अस्ति च अनैकान्तिकपदार्थज्ञानं तस्य अनैकान्तिकः इति तु लक्षणम्। अनैकान्तिकस्य व्युत्पत्तिस्तावत् किरणावल्यां विद्यते यत् ''एकः साध्यमेव अन्तः नियामकस्य

1. प्रमाणपद्धतिः, भिक्षु जयतीर्थ, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलुरु, 2010
2. वैशेषिकसूत्र 3-1-15, महर्षि कणादः, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, 2003
3. न्यायसारः, भासर्वज्ञः, निर्णयसागरप्रेसः मुम्बई, 1910
4. न्यायसूत्रः, 1-2-4, महर्षि गौतमः, भाष्यवार्तिकटीकापरिशुद्धियुक्तम्, अनन्तलालठक्कुरेण संस्कृतम्, मिथिलाविद्यापीठग्रन्थमाला, 1967
5. न्यायसिद्धान्तमुक्तावलिः, पंचाननः विश्वनाथन्यायः, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, 2003
6. न्यायकलिका, भट्ट-जयन्तः, गंगानाथझामहोदयेन सम्पादितम्, इलाहाबाद, 1925
7. न्यायसूत्र, 1-2-4, महर्षि गौतमः, भाष्यवार्तिकटीकापरिशुद्धियुक्तंम्, अनन्तलालठक्कुरेण संस्कृतम्, मिथिलाविद्यापीठग्रन्थमाला, 1967
8. न्यायभाष्यः, वात्स्यायनः, उपरोक्तमस्ति

नियमस्य व्याप्त्यात्मकस्य निरुपको यस्य स एकान्तः, न एकान्तः अनैकान्तः अर्थात् साध्यनिरुपितव्याप्तिशून्यः''[1] यथा ''शब्दो नित्यः अस्पर्शत्वात्'' इति, यत्र अस्पर्शत्वं नास्ति उद्भुतघटादौ तत्र नित्यत्वमपि नास्ति एवम् आत्मादौ अस्पर्शत्वमप्यस्ति एवं नित्यत्वमपि, अतः शब्दे अस्पर्शत्वमस्ति अतः नित्यत्वमपि सिध्येत्, किन्तु एवं द्विविध दृष्टान्तसम्भवेपि ज्ञानादौ अस्पर्शत्वरुपहेतुरस्ति किन्तु नित्यत्वरुपसाध्यं नास्ति अतः अयं हेतुः साध्यनिरुपितव्याप्तिशून्यः अनैकान्तिकः।

प्रमाणपद्धतौ अनैकान्तिकस्य लक्षणमस्ति यत् ''पक्षसपक्षविपक्षवृत्तिरनैकान्तिकः''[2] इति। बौद्धतर्कभाषायां तावत् अनैकान्तिकस्य लक्षणमस्ति यत् ''व्याप्त्यनिश्चये हेतोरनैकान्तिकः''[3] अर्थात् हेतौ व्याप्तेः अनिश्चय एव। वैशेषिकसूत्रविवृतौ तावत् अस्य लक्षणमस्ति यत् ''साध्यसन्देहजनक--पक्षधर्मताज्ञानविषयः अनैकान्तिकः''[4] लक्षणमेतत्तु प्राचीनमतानुसारेण विद्यते, साध्यसंदेहश्च त्रिविधः पक्षे सहचरत्वाद्वा साध्यतद्रहितत्वयोः, सामान्याद्वा विशेषाद्वा संशयो भवति त्रिधा, तदर्थश्च साध्यतदभावयोः पक्षे एव हेतुसाहचर्यदर्शनात् संशयो भवति, यथा घटः क्षितित्ववान् द्रव्यत्वादिति इत्यत्र द्रव्यत्वं क्षितित्ववति घटे अथ च क्षितित्वाभाववति जलादौ विद्यते अतः इति तु सामान्यधर्मदर्शनादिति। तादृशस्य अनैकान्तिकस्य भेदत्रयं कारिकावल्याम् उक्तं यत्

**''आद्यः साधारणस्तु स्यादसाधारणकोऽपरः**
**तथैवानुपसंहारि केवलान्वयिपक्षकः''[5]**

अनैकान्तिकस्य प्रथमं भेदः साधारणः विद्यते तस्य लक्षणमपि उक्तं यत् ''यः सपक्षे विपक्षे च भवेत् साधारणस्तु सः''[6] अर्थात् सपक्षवृत्तित्वे सति विपक्षवृत्तित्वं यथा ''पर्वतो धूमवान् वह्नेः'' इत्यत्र सपक्षः महानसादिकं, तत्र वह्निः विद्यते, विपक्षः आयोगोलकं तत्रापि वह्निर्विद्यते अतः पर्वते धूमसाधने वह्निहेतुः साधारणहेत्वाभासः। विशेष्यदलानुपादाने तु सद्धेतुमात्रे अतिव्याप्तिः, लक्षणघटकविशेषणानुपादाने विरुद्धेतिव्याप्तिः।

अथवा केचन वदन्ति यत् विशेषणांशपरित्यागेनापि विरुद्धे नातिव्याप्तिः। यतोहि साधारणविरुद्धयोः दूषकताबीजस्य भिन्नतया तयोः भिन्नत्वं स्यात्। यतोहि दूषकताबीजे भेदस्तु प्रतिबन्धकत्वस्वरुपभेदप्रयोजकः, विरुद्धस्तु सामानाधिकरण्यग्रहविरोधी साधारणज्ञानं तु अव्यभिचारग्रहविरोधी। अतः अनयोर्भेदः कर्तुं शक्यते। अतः अनयोः दूषकताबीजस्य भिन्नत्वं प्रदर्श्य गंगेशोपाध्यायेनापि विरुद्धस्वरुपाऽसिद्धयोः अतिव्याप्ति परिहरति। तर्कसंग्रहकारेण तु तस्य लक्षणमुक्तं यत् ''तत्र साध्याभाववद्वृत्तिः साधारणो अनैकन्तिकः''[7] अयं तु साध्यभाववदवृत्तिरुपव्याप्तिज्ञानस्य प्रतिबन्धकमिति।

---

1. किरणावलिः, आचार्य श्रीकृष्णवल्लभः, मुक्तावलेः व्याख्या, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, 2003
2. प्रमाणपध्दतिः, जयतीर्थः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेग्ङलुरु, 2010
3. बौद्ध तर्कभाषा, मोक्षाकर गुप्तः, रघुनाथगिरिकृतहिन्दीव्याख्यासहितम्, प्राच्य प्रकाशनम्, वाराणसी, 1969
4. वैशेषिकसूत्रविवृत्तिः,
5. न्यायसिद्धान्तमुक्तावलिः, विश्वनाथन्याय पंचाननः, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, 2003
6. न्यायसिद्धान्तमुक्तावलिः, विश्वनाथन्याय पंचाननः, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, 2003
7. तर्कसंग्रहः, अन्नं भट्टः, न्यायबोधिनिपदकृत्यसहितम्, भार्गवपुस्तकालयः, गायघट्टः वाराणसी, 1944

महर्षिकणादेन सूत्रव्याख्यानावसरे साधारणस्योदाहरणं प्रदर्शित यत्[1] ''यस्माद्विषाणी तस्माद् गौरिति अनैकान्तिकस्योदाहरणम्'' अर्थात् महिषं गौ: विषाणित्वादिति प्रदर्श्य साधारणलक्षणे हेतो: पक्षवृत्तित्वमभिमतम् इति प्रतीयते, किन्तु सूत्रे अनुल्लेखात् पक्षवृत्तित्वं सूत्रकाराभिमतमिति निश्चप्रचं वक्तुं न शक्यते। किन्तु न्यायकलिकायामथ च तर्कभाषायां च लक्षणे पक्षवृत्तित्वमपि विद्यते, तदा तन्मते पर्वतो वह्निमान् जलादित्यत्र न साधारणत्वं जलस्य पर्वतेरभावात्। तस्य भेदचतुष्टयं न्यायकलिकायां-दृश्यते, उक्तं च जयन्तभट्टेन ''स चायमनैकान्तिकश्चतुर्विध: सपक्षैकदेशवृत्ति:, विपक्षव्यापि, विपक्षैकदेशवृत्ति:, सपक्षव्यापि उभयपक्षैकदेशवृत्ति: उभयपक्षव्यापीति" प्रकारभेदव्युत्पादनमप्रयोजनं साधारणत्वानपायात्। इत्थं भेदमुक्त्वा तस्य अप्रयोजनत्वमपि प्रतिपादितम्।

भासर्वज्ञेन न्यायसारे अनैकान्तिकस्य अष्टप्रकारकाभेदोक्त:, किन्तु अत्र नोल्लेख्यते विस्तरभयात्, सर्वेषामेव त्रिष्वेवान्तर्भाव:। अनैकान्तिकस्य द्वितीयभेदस्तु आसाधारणमस्ति, तल्लक्षणं विश्वनाथेन कारिकायामुक्तं यत् ''यस्तूभयस्माद् व्यावृत्त: स चासाधारणो मत:''[2] अर्थात् यो हेतु: सपक्षेपि नास्ति विपक्षेपि नास्ति स: असाधारण: इति तु प्रचीनमतानुसारेण लक्षणं, लक्षणेस्मिन् पक्षवृत्तित्वं हेतो: आवश्यकम् वा न वेति विश्वनाथेन न किमपि उक्तं, किन्तु उदाहरणे हेतो: पक्षवृत्तित्वं प्रदर्शितं यथा ''शब्दो अनित्य: शब्दत्वात्'' इत्यत्र यदा शब्दे अनित्यत्वस्य सन्देहस्तदा शब्द: नहि सपक्ष: विपक्षो व भवितुमर्हति, एवं स्थितौ सपक्ष: घटादि: तत्रापि शब्दत्वं नास्ति, विपक्ष: आकाशादिकं तत्रापि शब्दत्वं नास्ति अत: शब्दत्वहेतु: असाधारण:। एतदतिरिच्य प्रायश: सर्वेपि दार्शनिका: लक्षणे शब्दत: पक्षवृत्तित्वं नोक्तवन्त: तथापि उदाहरणे हेतो: वृत्तित्वं दृश्यते।

असाधारण्यविरोधादिस्थलेपि पक्षताकाले असाधारणस्य पृथग्दोषता। अन्यथा यदि ''भूर्नित्या गन्धवत्वात्'', ''शब्दो नित्य: शब्दत्वात्'' इत्यादौ सर्वत्र पक्षत्वेनाभिमतो साध्यनिर्णयं कृत्वा क्रमश: साधारणविरुद्ध सध्देतुत्वादीनामेव प्रवृत्तौ असाधारणस्य पृथग्दोषतैव नास्तीत्युच्यते तदा पक्षभंगप्रसंग: स्यादिति गंगेशोपाध्यायेन प्रपंचितम्।

नव्यास्तु सपक्षव्यावृतत्त्वमात्रं स्वीकृयते न्यायबोधिनिकारस्तु सर्वसपक्षविपक्षव्यावृत्त: इति पदेन केवल सपक्षव्यावृत्त: इति पदस्य साध्यासामानाधिकरण्यमित्यर्थ करोति उक्तं च ''हेतौ साध्यासामानाधिकरण्ये निश्चिते साध्यसामानाधिकरण्यरुपव्याप्तिग्रहप्रतिबन्ध: फलमिति''[3], एवं न्यायबोधिनिकारेण सपक्षव्यावृत्तत्वमात्रं समर्थ्यते।

आधुनिकास्तु साध्यव्यापकीभूताभावप्रतियोग्यसाधारणत्वं स्वीक्रियते अन्यथा ''पृथ्वी स्वेतरभिन्ना गन्धवत्वात्'' इति व्यतिरेक्यनुमाने गन्धवत्त्वहेतु: सपक्षेपि नास्ति विपक्षेपि नास्ति अत: समस्तव्यतिरेकिहेतो: असाधारणहेत्वाभासत्वापत्ति:, अत: यदि साध्यव्यापकीभुताभावप्रतियोग्यसाधारणत्वे च गन्धाभाव: नहि साध्यव्यापक:, अत: अयमेव लक्षणमुचितम्।

---

1. वैशेषिकसूत्र:, कणाद:, अंग्रेजीव्याख्यासहितम्, पाणिनी ऑफिस भुवनेश्वरी आश्रम, इलाहाबाद, 1923
2. न्यायसिद्धान्तमुक्तवली:, पंचानन: विश्वनाथन्याय, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, 2003
3. तर्कसंग्रह:, अन्नं भट्ट:, न्यायबोधिनिपदकृत्यसहितम्, भार्गव पुस्तकालय:, गायघाट्ट: वाराणसी, 1944

अनैकान्तिकस्य तृतीयभेदमस्ति अनुपसंहारीति, तल्लक्षणं विश्वनाथेनोक्तं यत् "तथैवानुपसंहारी केवलान्वयिपक्षक:"[1] अर्थात् केवलान्वयिपक्षकत्वम् अनुपसंहारीत्वं यथा सर्वम् अभिधेयं प्रमेयत्वादिति इत्यत्र सर्वस्यैव पक्षत्वेन साध्यसन्देह: तदा सपक्षविपक्षाप्रसिद्धेश्च अत: साध्यहेतो: सामानाधिकरण्यात्मकव्याप्तिग्रहार्थं स्थलानुपलम्भात् व्याप्तिं विना नानुमिति: इति तु प्राचीनमतम्। इदं नोचितं यतोहि सर्वस्यैकदेशे घटे सामानाधिकरण्यव्याप्तिग्रहे न कापि बाधा, सर्वत्वावच्छेदेन साध्यसंशयोपि घटे साध्यनिश्चये जाते सपक्षस्य प्रसिद्धत्वेन व्याप्ति: संजायते, तेन अनुमितिरुत्पद्यते, यदि समानविषयकत्वेन प्रतिबध्यप्रतिबन्धकभाव: अभ्युपेयते तदा सर्वत्वावच्छेदेन साध्यसंशये जाते नहि घटत्वावछेदेन साध्यनिश्चय: तदा तु व्याप्तिग्रहाऽभावात्मिका असिद्धि: विद्यते, अत: अनुपसंहारीणो: न पृथक्हेत्वाभासत्वं स्वीक्रियते।

तर्कसंग्रहकारेण उक्तं यत् अन्वयव्यतिरेकदृष्टान्तरहित: अनुपसंहारि:, तत्र अन्वयदृष्टान्ताभावात् साध्यसामानाधिकरण्यरूपव्याप्तिग्रहप्रतिबन्ध: एवं व्यतिरेकदृष्टान्ताभावात् अव्यभिचरितत्त्वरुपव्याप्ति-ग्रहप्रतिबन्ध:, केवलान्वयिपक्ष: इत्यस्य केवलान्वयिधर्मावच्छिन्नपक्ष न तु पक्षेण केवलान्वयिना भाव्यमिति अन्यथा "सर्वमनित्यं प्रमेयत्वादित्यस्यानुपसंहारिता" न स्यात्, सर्वत्वावछिन्नस्याकेवलान्वयित्वात्।

वस्तुतस्तु केवलान्वयिधर्मावच्छिन्नपक्षक इत्यस्य चत्वार: प्रकार: विद्यते, प्रथमं केवलान्वयिसाध्यक-केवलान्वयिहेतुकत्वं, द्वितीयं तु केवलान्वयिसाधक-व्यतिरेकहेतुकत्वम्, तृतीयं तु व्यतिरेकिसाध्यक-केवलान्वयिहेतुकत्वं, चतुर्थ तु व्यतिरेकिसाध्यक-व्यतिरेकिहेतुकत्वम्। तत्र केवलान्वयिसाध्यकयो: प्रथम द्वितीययो: सद्धेतुत्वनियमेन न हेत्वाभासत्वम्, तृतीयस्थले हेतो: केवलान्वयित्वात् सपक्षविपक्षवृत्तित्वेन असाधारण्यमिति, चतुर्थस्थले हेतो: व्यतिरेकित्वात् भागासिद्धि: अत: तस्य पार्थक्येण अस्वीकारे न क्षति:, इति संक्षेपेण अनैकान्तिकस्य विभिन्नविषयकमतभेद: तत्स्वरुपं चात्र प्रस्तुतमिति दिक्।

**सन्दर्भग्रन्थसूची:**

1. किरणावली, (मुक्तावले: व्याख्या.) आचार्य-श्रीकृष्णवल्लभ: वाराणसी. चौखम्बासंस्कृतसंस्थानम्, 2003
2. जैन तर्कभाषा, यशोविजय: सिन्धीजैनग्रन्थमाला:, अहमदाबाद, 1931
3. तर्कसंग्रह:, (न्यायबोधिनी सहित), अन्नं भट्ट:, वाराणसीत:, चौखम्बासंस्कृतसंस्थानम्, 2005
4. तत्त्वचिन्तामणि:, गंगेशो उपाध्याय:, कलकत्ता, एशियाटिक-सोसायटि-ऑफ-बंगाल:, 1912
5. न्यायकलिका, जयन्त भट्ट:, गंगानाथझामहोदयेन सम्पादितम्, इलाहाबाद, 1925
6. न्यायसूत्र:, महर्षि गौतम:, भाष्यवार्तिकटीकापरिशुद्धिसहितम्, अनन्तलालठ्क्कुरेण सम्पादितम्, मिथिलाविद्यापीठग्रन्थमाला, 1967
7. न्यायसार:, भासर्वज्ञ:, मुम्बई:, निर्णयसागर प्रेस, 1910
8. न्यायसिद्धान्तमुक्तावली:, विश्वनाथ पंचानन:, श्रीकृष्णवल्लभाचार्यकृतकिरणावली सहितम्, वाराणसी:, चौखम्बा संस्कृत संस्थान।
9. न्यायबिन्दु:, (धर्मोत्तरकृत न्यायबिन्दु टीका सहित), धर्मकीर्ति:, कोलकात्ता, एशियाटिक: सोसायटी-ऑफ-बंगाल, 1929
10. प्रमाणपद्धति:, जयतिर्थ बेङ्गलुरु:, पूर्णप्रज्ञसंशोधनमन्दिरम्, 2010
11. बौध तर्कभाषा, मोक्षाकर-गुप्त:, रघुनाथदेवगिरि-कृत-हिन्दी-व्याख्यासहितम्, वाराणसी, प्राच्य विद्याप्रकाशन, 1961
12. वैशेषिकसूत्र:, कणाद: प्रशस्तपादभाष्यसहितम्, वाराणसी, चौखम्बासंस्कृतसंस्थानम्, 1895
13. सामान्यनिरुक्ति:, गंगेशो उपाध्याय:, वाराणसी, चौखम्बासंस्कृतसंस्थानम्, 1998

1. न्यायसिद्धन्तमुक्तवली:, विश्वनाथन्याय पंचानन:, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, 2003

ISSN - 0974-8946
अप्रैल-जून 2018

शोधप्रभा
वर्षः 43, द्वितीयाङ्कः

# वर्णसमीक्षाग्रन्थसन्दर्भे श्रुतिविचारः, नाट्यशास्त्रीयग्रन्थानां परिप्रेक्ष्ये

डॉ.सुमनकुमारझाः*

**ध्वनिर्वर्णाः पदं वाक्यमित्यास्पदचतुष्टयम्।**
**यस्याः सूक्ष्मादिभेदेन वाग्देवीं तामुपास्महे।।**

पण्डितप्रवरमधुसूदनओझाविरचितो वर्णसमीक्षा इति ग्रन्थः संस्कृतसाहित्यशास्त्राध्येतृभ्यो महदुपयोगी प्रतिभाति। तत्रापि नाट्यशास्त्रपरिप्रेक्ष्ये ग्रन्थस्यास्य किमपि विशिष्टमेव महत्त्वं वर्तते। वर्णसमीक्षाग्रन्थे वर्ण-पद-वाक्य-स्वरादीनां विशिष्टं विवेचनं प्राप्यते, एते विषयाः साहित्यशास्त्रस्यापि विषया विद्यन्ते। यतः काव्येषु विशेषतो नाट्येषु श्रुति-नाद-ताल-लय-मूर्च्छना-तान-ग्राम-राग-प्रभृतयो विषयाः विशेषरूपेण निरूप्यन्ते । महाकविमाघेनापि शिशुपालवधमहाकाव्यस्य प्रथमे सर्गे एते विषया वर्णिताः सन्ति। यथा-

**रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः।**
**स्फुटीभवद्ग्रामविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः।।**

ग्रन्थारम्भे एव ग्रन्थस्य विषयवस्तूनां वर्णनमित्थं क्रियते ग्रन्थकारेण-

**धर्मादभ्युदयः सदाऽभ्युदयते धर्मश्च साहित्यतो,**
**विज्ञाप्योऽप्यविनाकृतं तदपि वा वाक्यैश्च वाक्यं पुनः।**
**संपद्येत पदैः, पदं पुनरिदं वर्णाहितं वर्ण्यते,**
**तस्माद्वर्णनिरूपणं प्रथमतः कर्तुं समुद्यम्यते।।** [1]

अर्थात् धर्मात् सदाऽभ्युदयो भवति, धर्मः साहित्येन विज्ञापनीयो भवति, तच्च साहित्यं नित्यं वाक्यसम्बद्धं वर्तते। वाक्यं पदैः संपद्यते, पदानां निर्मितिर्वर्णैर्जायते, अतो वर्णतत्त्वं समीक्ष्यत इति । तत्र ग्रन्थकारेण पण्डितप्रवरेण मधुसूदनओझामहोदयेन स्वरप्रकरणस्य विवेचनान्तर्गते श्रुतिलक्षणं विचारितम्। यथा तत्रादौ स्वरः समीक्ष्यते- **स्वरस्तावन्नवधाश्वासलक्षणः, नादलक्षणः, विचारलक्षणः, स्थानलक्षणः, व्यक्तिलक्षणः, गेह्यलक्षणः, श्रुतिलक्षणः, सवनलक्षणः, भागलक्षणश्चेति।** एतेषु श्रुतिलक्षणरूपस्वरः सविशेषेण ग्रन्थकारेणात्र व्याख्यातः।

---

* सहाचार्यः, साहित्यविभागः, श्री.ला.ब.शा.रा.सं.विद्यापीठम्, नवदेहली-16

1. वर्णसमीक्षा- प्रथमः श्लोकः।

व्याख्यानेऽस्मिन् तेन भरत-विशाखिल-शार्ङ्गदेव-शारदातनय-नन्दिकेश्वरप्रभृतय आचार्याः ससन्दर्भेणोल्लिखिताः। तत्र नाट्यशास्त्र-सङ्गीतरत्नाकर-भावप्रकाशनाभिनयदर्पणप्रभृतिभ्यो ग्रन्थेभ्यो नैके सन्दर्भा उपस्थापिताः सन्ति। परं तत्र **'विशाखिनोऽप्याहुः'** इत्युद्धरणं विचारणीयं विद्यते, यत्किमेते विशाखिलाः सन्ति? कश्चिदन्यो वा ? नाट्यशास्त्रसङ्गीतशास्त्रपरम्परायामत्यन्तप्राचीनाचार्योऽस्ति विशाखिलो येन नाट्यशास्त्रकलाशास्त्र-सङ्गीतशास्त्रसम्बद्धग्रन्था लिलेखिरे, इत्यस्य प्रमाणं नाट्यशास्त्रग्रन्थस्य अभिनवभारतीटीकाया लोचनटीकायाः, अन्यनाट्यशास्त्रीयग्रन्थानामुद्धरणैः प्राप्यते।

नाट्यशास्त्रपरम्परा विशाखिलं भरतपूर्ववर्तिनं मनुते। सम्प्रति विशाखिलप्रणीतः कोऽपि ग्रन्थो नोपलभ्यते। वर्णसमीक्षाग्रन्थे **'विशाखिनोऽप्याहुः'** इत्यनेन प्रतीयते यत्- विशाखिलविरचिता काऽपि कृतिः ग्रन्थकारेण प्राप्ता स्यादथवा अन्येभ्यो ग्रन्थेभ्य उद्धरणं स्वीकृतमिति गवेषणाविषयः। कोहल-दत्तिल-मत्तङ्गमुनि-नन्दिकेश्वरप्रभृतय आचार्या भरतपूर्ववर्तिनः सन्तीति विदुषामभिमतम्।

वर्णसमीक्षाग्रन्थे ओझामहोदयो द्वाविंशतिविधं ध्वनिं श्रुतिसंज्ञं जनयतीति वर्णनमकार्षीत्। ततः सप्त शुद्धस्वराः, द्वादश च विकृतस्वरा उत्पद्यन्ते, इत्थमेकोनविंशतिः स्वरा उत्पद्यन्ते। त एवात्र श्रुतिलक्षणस्वरा आख्याताः। यथा चोक्तं सङ्गीतशास्त्रे-

**शारीरं नादसम्भूतिः स्थानानि श्रुतयस्तथा।**
**ततः शुद्धा स्वराः सप्त विकृता द्वादशाप्यमी॥**

वस्तुतः श्रवणयोग्यत्वात् **'श्रुतिः'** इति कथ्यते। **'श्रवणात् श्रुतयो मताः'**[1]। ननु यदि श्रुति-स्वरयोरुभयत्र श्रवणयोग्यत्वमेव लक्षणं तर्हि द्वयोः पार्थक्यं किम्? अत्र चोच्यते सङ्गीतरत्नाकरस्य कलानिधिटीकाकारेण कल्लिनाथेन-

**'प्रथमघातरूपक्षणिकध्वनेर्नाम श्रुतिरस्ति, तत्पश्चात् जायमानोऽनुरणनात्मको दीर्घ-ध्वनिः स्वरः कथ्यते, इदमेव द्वयोः पार्थक्यम्'**[2] शार्ङ्गदेवेनाप्युच्यते-

**श्रुत्यन्तरभावी यः स्निग्धोऽनुरणनात्मकः।**
**स्वतो रञ्जयति श्रोतृ-चित्तं स स्वर उच्यते॥**[3]

शारदातनयविरचिते भावप्रकाशनग्रन्थे वर्णितमस्ति -

**नादः श्रुतिसमुत्पत्तिः श्रुतिभ्यः स्वरसम्भवः॥**
**नाडीभ्यः श्रुतिसम्भूतिर्नाडीनां स्थानमुच्यते॥**[4]

---

1. संगीतरत्नाकरः- 1/3/8
2. कलानिधिटीका-पृ./67
3. सङ्गीतरत्नाकरः-1/3/24,25
4. भावप्रकाशनम्-सप्तमोऽधिकारः, का.सं.-20

सङ्गीतरत्नाकरे नादलक्षणमित्थं प्राप्यते-

**नकारं प्राणनामानं दकारमनलं विदुः।**
**जातः प्राणाग्निसंयोगात्तेन नादोऽभिधीयते॥**[1]

अर्थात् 'न'कारः प्राण कथ्यते, दकारश्चाग्निः। इत्थं प्राणाग्निसंयोगादुत्पन्नो नादोऽभिधीयते। पुनश्च सवनप्रक्रमे गृहीतस्वरारम्भकद्रव्याणां ब्रह्मरन्ध्रपर्यन्तं सञ्चरतां नाडीप्रदेशेषु तत्तत्स्थानेषु विलक्षणानेकसंयोगवशादुपजायमाने स्वररूपगतवैलक्षण्यमाश्रित्य एते स्वरविभागा अपरे प्रकल्प्यन्ते। ते च सप्त भवन्ति- **षड्जः, ऋषभः, गान्धारः, मध्यमः, पञ्चमः, धैवतः, निषादश्चेति।** यदि कश्चिदुरसा प्रक्रमेत, कण्ठेन शिरसा वा तदा प्रतिप्रक्रमं स्वनिमित्तसंयोगादिमे सप्तभावाः स्वरस्योपपद्यन्ते। यथा तारभाषी सप्तभिरेतैः स्वरैर्गातुं शक्यते, तथैव मन्दभाषी जनोऽपि गातुं शक्नोति। अत्र ग्रन्थकारो नारदीयशिक्षामुपस्थापयति। यथा- उक्तञ्च नारदीये -

**उरः कण्ठः शिरश्चैव स्थानानि त्रीणि वाङ्मये।**
**सवनान्याहुरेतानि सन्ति चाप्यधरोत्तरे॥**

**उरः सप्तविचारं स्यात् तथा कण्ठस्तथा शिरः।**
**न च सप्तोरसि व्यक्तास्तथा प्रावचनो विधिः॥**[2]

ओझामहोदय एतेषां सप्तस्वराणां स्वरूपपरिचयार्थं पशुपक्षिणां स्वराणामभिज्ञानस्याभ्यासः कर्त्तव्य इति निर्दिशति । सन्ति हि बहवः पशवः पक्षिणो वा ये तत्तत्स्वरानुरूपं प्रायेण शब्दं कुर्वन्ति, तेषु कानिचिदत्र प्रदर्श्यन्ते। यथा-

**षड्जं रौति मयूरो हि गावो रम्भन्ति चर्षभम्।**
**अजा विरौति गान्धारं क्रौञ्चो नदति मध्यमम्॥**

**पुष्पसाधारणे काले कोकिलो रौति पञ्चमम्।**
**अश्वस्तु धैवतं रौति निषादं रौति कुञ्जरः॥** इति नाशदीयशिक्षा।[3]

केचित्तु ऋषभगान्धारयोः स्वरूपे विपर्ययेण प्रवर्तन्ते। मयूरः षड्जस्वरे शब्दायमानो भवति, अजामुखे ऋषभस्वरः, गावो रम्भन्ति गान्धारस्वरे, क्रौञ्चपक्षी मध्यमस्वरे वदति, कोकिलस्य स्वरः पञ्चमो बोधयेत्, अश्वस्य स्वरोऽस्ति धैवतः, गजो ब्रूते निषादस्वरे इति । परमेतन्न समीचीनमिति ओझामहोदयस्य मतम्।[4]

---

1. सङ्गीतरत्नाकरः- स्वरगताध्यायः-3/6
2. वर्णसमीक्षा- पृ.-124
3. वर्णसमीक्षा-पृ.,125
4. यथा- तदसत्- षड्जोऽप्यृषभगान्धारौ मध्यमः पञ्चमस्तथा। धैवतश्च निषादश्च स्वराः सप्त प्रकीर्तिताः॥
   मयूर-वृषभ-च्छाग-क्रौञ्च-कोकिल-वाजिनः। मातङ्गश्च क्रमेणाहुः स्वरानेतान् सुदुर्गमान्॥
   ऋषभं चातको वक्ति धैवतञ्चापि दर्दुरः। वर्णसमीक्षा-पृ.125

इत्यादि संगीतकानेकवचनविसंवादात् । मदावस्थायां तु सर्वेऽप्येते पञ्चमे नदन्ति। तदुक्तं भरतेन-

**षड्जञ्च पञ्चमञ्चेति मयूरो नदति द्विधा।**
**अश्वाद्या धैवतादींश्च प्राहुर्मत्ताश्च पञ्चमम्॥**

विशाखिनोऽप्याहुः-

**अश्वस्तु धैवतं सोऽपि मत्तः पञ्चमसञ्ज्ञकम्।**
**निषादन्तु गजो गर्जत्युन्मदोऽसौ सपञ्चमम्॥**

तत्र स्वराणामुत्पत्तिस्थानान्यपि प्रदर्शितानि। तत्र विलक्षणयोनिसंयोगा एव निमित्तानि भवन्ति। योनिरिति प्रभवस्थानम्। सर्वप्रथमं यत्राऽऽहन्यमानो वायुः स्वरस्वरूपं सम्पादयति स प्रदेशस्तस्य स्वरस्य योनिरित्युच्यते। तत्र कश्चित्स्वर एकस्मादेव प्रदेशात्प्रभवति, कश्चिद्वाभ्याम्, कश्चिद्वा बहुभ्यः प्रदेशेभ्य उत्पद्यते। यथा- स्वराणामुत्पत्तिस्थानमधोलिखितरूपेण प्रदर्श्यते-

1. **षड्जः - एकस्थानः - कण्ठात्**
2. **ऋषभः -एकस्थानः -शिरसः**
3. **गान्धारः - द्विस्थानः - मुखनासिकाभ्याम्**
4. **मध्यमः - एकस्थानः - उरसः**
5. **पञ्चमः - त्रिस्थानः - उरकण्ठशिरोभ्यः**
6. **धैवतः - -एकस्थानः - ललाटात्**
7. **निषादः - बहुस्थानः - सर्वसन्धिभ्यः** । सप्तस्वराणामेतेषां लक्षणं स्थानानि चेत्थं वर्तन्ते -

**षड्जः - नासा कण्ठः उरस्तालु जिह्वा दन्तास्तथैव च ।**
**षड्भिः संजायते यस्मात्तस्मात्षड्ज इति स्मृतः॥**[1]

अर्थात् षड्जस्य उरः, जिह्वा कण्ठः तालु दन्ताः, नासा चेति षट्स्थानानि। अत एवासौ षड्ज इत्युच्यते। षडितरान् स्वरान् जनयति, षड्भ्यो वेतरेभ्यः स्वरेभ्यो जायते, ततो वाऽसौ षड्ज इत्युच्यते। **ऋषभः**-नाभेः समुत्थितो वायुः कण्ठशीर्षसमाहतः। **नदत्यृषभवद्यस्मात्तस्मादृषभ ईरितः॥**[2]

---

1. सङ्गीतरत्नाकरस्य सुधाकरी टीका, खण्डः,1,पृ.-84
2. तत्रैव- पृ.- 84

ऋषभस्य कण्ठः शिरश्चेति द्वे स्थाने । स ऋषभनर्दितवदाभासत्वात् ऋषभः । गोमण्डलीषु ऋषभवत् स्वरमण्डलीषु प्रकर्षेण भासते ततो वायमृषभः।

**गान्धारः- नाभेः समुत्थितो वायुः कण्ठशीर्षसमाहतः ।**
**गन्धर्वसुखहेतुः स्याद्गांधारस्तेन हेतुना ।।[1]**

अर्थात् गान्धारस्य कण्ठः शिरश्चेति द्वे स्थाने। गन्धमृच्छति गन्धारो नासाप्रदेशः। गान्धाराज्जातो गान्धारः । गानस्वरूपं वैशिष्ट्येन धारयति इत्यतो वा गान्धारः।

**मध्यमः- वायुः समुत्थितो नाभेर्हृदये च समाहतः।**
**मध्यस्थानोद्भवत्वात्तु मध्यमत्वेन कीर्तितः।।[2]**

अर्थात् मध्यमस्य उरः, हृदयं, नाभिश्चेति त्रीणि स्थानानि। सनाभेः समुत्थाय वायुरुरःप्रदेशं गत्वा पुनर्नाभिमेवोपक्रमते इत्यूर्ध्वाधरभागाक्रमणान् मध्यमत्वं गच्छतीति मध्यम उच्यते स महानादः।

**पञ्चमः - वायुः समुत्थितो नाभेरोष्ठकण्ठशिरोहृदि ।**
**पञ्चस्थानसमुद्भूतः पञ्चमस्तेन कीर्तितः ।।[3]**

अर्थात् पञ्चमस्य उरः,कण्ठः,शिरः,हृदयं,नाभिश्चेति पञ्चस्थानानि। स पञ्चस्थानाक्रमणात् पञ्चम इत्युच्यते। इतरस्वरान् विस्तारयत्यतो वा पञ्चमः। स्वरक्रमे पञ्चमत्वाद्वा पञ्चमः।

**धैवतः - नाभेः समुत्थितो वायुः कण्ठतालुशिरोहृदि ।**
**तत्तत्स्थानधृतो यस्मात्ततोऽसौ धैवतो मतः।।[4]**

परम् ओझामहोदयानुसारं ललाटमेकं स्थानम्। बुद्धिक्षेत्रत्वात् ललाटं धीवत् । तदुत्पन्नो धैवतः। धीमदभिरूपक्रम्यत्वाद्वा ।

**निषादः- नाभेः समुत्थितो वायौ कण्ठतालुशिरोहते।**
**निषिदन्ति स्वराः सर्वे निषादस्तेन कथ्यते।।[5]**

---

1. तत्रैव- पृ.- 84
2. तत्रैव-पृ., 84
3. तत्रैव-पृ. 84
4. तत्रैव-पृ. 84
5. तत्रैव-पृ. 84 स्वर्यमाणतया तत्तत्स्थानेषु मरुदाहतेः।
   स्वरसंज्ञां लभन्ते ते तत्तन्नामपुरस्कृताः।।
   भावप्रकाशनम् - सप्तमोऽधिकारः, का.सं., 22-26।

ओझामहोदयेन तु – निषादस्य सर्वसन्धयः स्थानानि सर्वे स्वरा अत्र निषीदन्ति स सर्वस्वरलयस्वरो निषादः। स्वरमध्येऽत्रैव निष्ठा भवतीत्यतो वा निषादः। वस्तुत एते स्वराः कण्ठादिभ्यः प्राधान्येन गृहीतेभ्यः स्थानेभ्य उत्पाद्यमानाः षड्जादयोऽन्यान्यपि कानिचित्स्थानानि गुणत्वेन स्पृशन्ति । तत्रायं नाभेः समुत्थितो वायुः प्रधानानि गौणानि वा यावन्ति स्थानानि संश्रित्य स्वर-स्वरूपं सम्पादयति ।

एतेषां सप्तस्वराणां स्वरूपमन्येषु नाट्यशास्त्र-भावप्रकाशन-रसार्णवसुधाकर- सङ्गीतरत्नाकरप्रभृतिषु ग्रन्थेष्वपि प्रायशोऽल्पपरिवर्तनेन प्रदर्शितमस्ति।[1]

सङ्गीतशास्त्रे सप्तस्वरास्त्रयो ग्रामाः मूर्च्छनास्त्वेकविंशतिः ताना एकोनपञ्चाशद् द्वाविंशतिश्च श्रुतयो भवन्ति । एतेषां सप्तस्वराणां संज्ञाः **सरिगमपधनीत्यपराः मताः** । इति। सङ्गीतके तु किञ्चित्प्रकारभेदेनैतमर्थमाहुः तथाहि – वर्णसमीक्षायां यथा –[2]

तदित्थमुक्तानि स्वराणां प्रधानगौणस्थानानि । परे त्वाहुः – यत्रापि स्वराणां द्वे त्रीणि वा स्थानान्युक्तानि तत्राऽपि स्थानान्तरे सर्वथा न स्पृशतीति न शास्त्रवचनम् । यतो मन्दतरस्पर्शवतामप्येषामपि स्थानानामुलभ्यमानत्वात् । तथा च धैवतनिषादवर्जिताः सर्वे एव स्वराः पञ्चस्थाना इष्यन्ते । तदुक्तं नारदीयशिक्षायां –

**धैवतञ्च निषादञ्च वर्जयित्वा स्वरद्वयम्।**
**शेषान् पञ्च स्वरॉस्त्वन्यान् पञ्चस्थानोच्छ्रितान् विदुः।।**[3]

---

1. कण्ठे सज्जति यो नादः स षड्जः स्याच्चतुश्श्रुतिः।
ऋषभस्त्रिश्रुतिस्तालुमूले तस्य त्रिसम्भवात् ।।
शब्दो गौस्तां बिभ्रदोष्ठे गान्धारो द्विश्रुतिर्भवेत् ।
मूर्धमध्यस्थितो नादो मध्यमः स्याच्चतुश्श्रुतिः।।
पञ्चभिर्जायते दन्ततालुकण्ठोष्ठमूर्धभिः ।
चतुश्श्रुतिः पञ्चमः स्याद्दन्तपङ्क्तिसमाश्रयः ।।
कण्ठतालुधृतो नादो धैवतस्त्रिश्रुतिर्भवेत् ।
नादो निषण्णः कण्ठोष्ठे निषादो द्विश्रुतिर्भवेत् ।।
2. वायुः सम्मूर्च्छितो नाभेर्नाडयाश्च हृदयस्य च । पार्श्वयोर्मस्तकस्याऽपि षण्णां षड्जः प्रजायते ।।
नाभिमूलाद् यथा वर्ण उत्थितः कुरुते ध्वनिम्। वृषभस्येव निर्याति हेलया ऋषभः स्मृतः।।
नाभेः समुद्गतो वायुर्गन्धे श्रोत्रे च चालयन् । स शब्दस्तेन निर्याति गान्धारस्तेन कथ्यते ।।
मध्यमो मध्यमस्थानाच्छरीरस्योपजायते । नाभिमूलाच्च गम्भीरः किञ्चित्तारः स्वभावतः ।
प्राणोऽपानः समानश्च उदात्तो व्यान एव च । एतेषां समवायेन जायते पञ्चमः स्वरः ।।
गत्वा नाभेरधोभागे वस्तिं प्राप्योर्ध्वगः पुनः । धावन्निव च यो याति कण्ठदेशं स धैवतः ।।
षड्जादयः षडेतेऽत्र स्वराः सर्वे मनोहराः । निषीदन्ति यतो लोके निषादस्तेन कथ्यते ।।
वर्णसमीक्षा-पृ., 130 ।
3. वर्णसमीक्षा- पृ.,130

इत्थं सप्तस्वराणां प्रभवस्थानविचारो निरूपितः। एते च सप्त स्वराः पुनः त्रिषु वर्गेषु भिद्यन्ते। यथा चोक्तं याज्ञवल्क्यशिक्षायाम्-

**गान्धर्ववेदे ये प्रोक्ताः सप्त षड्जादयः स्वराः।**
**त एव वेदे विज्ञेयास्त्रय उच्चादयः स्वराः॥**

**उच्चौ निषादगान्धारौ नीचावृषभधैवतौ।**
**शेषास्तु स्वरिता ज्ञेयाः षड्जमध्यमपञ्चमाः॥**[1]

इत्येवमाचक्षाणेन याज्ञवल्क्येन सप्तस्वराणां त्रिष्वन्तर्भावः क्रियते तदेतदेषामुच्चादिव्याप्तं वर्तत इति तात्पर्यं प्रकटयति, न तूच्चाद्यैकरूपता सप्तस्वराणाम्। यतोऽभेदत्वे एकस्मिन्नेवोच्चे निषादत्वगान्धारत्वाभ्यां भेदप्रतिपादनमसमञ्जसयुक्तं भविष्यति तयोः स्वरूपभेदाच्च नैकरूप्यम्। उच्चादयो हि स्वराणामुत्थानं निपातञ्चापेक्ष्य प्रवर्तन्ते। षड्जादयस्तु स्वरशरीरारम्भकधर्मवैसादृश्यमपेक्ष्य प्रवर्तन्ते।

किञ्च सप्ताप्येते स्वरास्त्रेधा - **मन्द्राः मध्यास्ताराश्च**। तदित्थं सप्तस्वराः त्रिगुणित्वे एकविंशतिः स्वरा आख्यायन्ते । एतेषु मन्द्रा अनुदात्ताः, मध्याः स्वरिताः, ताराश्चोदात्ताः। तस्मादेते सप्त स्वरास्त्रैस्वर्याद् भिद्यन्ते । तत्र गान्धारनिषादावुच्चतो गृहीतौ भवत इत्यतस्तयोरुदात्तशब्दः प्रयुज्यते। ऋषभधैवतौ नीचतो गृहीतावित्यनुदात्तशब्दं भजतः। षड्जमध्यमपञ्चमास्तु मध्यतो गृहीता इति स्वरिताः कथ्यन्ते । इत्थं सप्तस्वराणां त्रैस्वर्यतो भेदविचारः प्रवर्तितः ।

लोचनटीकायामभिनवगुप्तपादाचार्येणाप्युक्तम् - **स्वराः षड्जादयः सप्त । श्रुतिर्नाम शब्दस्य वैलक्षण्यमात्रकारि यद्रूपान्तरं तत्परिणामा स्वरतदन्तरालोभयभेदकल्पिता द्वाविंशतिविधा । आदि शब्देन जात्यंशकग्रामरागभाषाविभाषान्तरभाषादेशीमार्गा गृह्यन्ते।**[2]

पुनः तत्र ओझामहोदयेन सप्तस्वरेषु श्रुतिसंख्या प्रतिपादिता । यथा - प्रागुपजायमानाः श्रुतयश्चैषां समारम्भका इत्यत एते श्रुतिस्वरा इहाख्याताः । एतेषामेव सप्तस्वराणां सूक्ष्मतमाः केचिदंशाः श्रुतिशब्देन कथ्यन्ते । श्रुतिरित्यस्यार्थोऽस्ति ध्वनिः, स च ध्वनिरिह द्वाविंशतिविधः । षड्जो मध्यमः पञ्चमश्चैते त्रयः स्वराश्चतसृभिश्चतसृभिः श्रुतिभिः संगठिताः। ऋषभधैवतौ तिसृभिस्तिसृभिः सम्पाद्यौ । अथ गान्धारनिषादौ द्वाभ्यां

द्वाभ्यां जायेते । यथा चोच्यते -

**चतुश्चतुश्चतुश्चैव षड्तमध्यमपञ्चमाः।**
**द्वे द्वे निषादगान्धारौ त्रिस्त्रिर्ऋषभधैवतौ॥ इति।**

1. याज्ञवल्क्यशिक्षा, स्वरप्रकरणम्- मात्राधिकारः, श्लोकसं.- 6,7
2. लोचनटीका-पृ. 95 प्रथम उद्योतः ।

तदित्थं द्वाविंशतिध्वनय एव न्यूनाधिकभागेन सप्तधा विभज्यमानाः सप्तस्वराः जायन्ते। इत्थं द्वाविंशतिः श्रुतयो भवन्ति। तासां नामानि सङ्गीतरत्नाकरे इत्थं वर्तते - नान्दी चालनिका रमा च सुमुखी चित्रा विचित्रा घना, मातङ्गी सरसामृता मधुकरी मैत्री शिवा माधवी। बाला शाङ्र्गरवी कला कलरवा माला विशाला जया, मात्रेति श्रुतयः पुराणविद्भिर्द्वाविंशतिः कीर्तिताः ।।

**श्रुतिलक्षणविचारक्रमे एव तेन राग-मूर्च्छना-तानप्रभृतीनि तत्त्वानि निरूपितानि। तत्र रागाय तेनोच्यते - श्रुत्यारब्धा एत एव सप्तस्वराः नियतक्रमविशेषा रागा इत्युच्यन्ते । यथा हि वर्णविशेषैः पौर्वापर्य्येण यथायथं सन्निविष्टैः कृतशरीराया वाचो राग इत्येषा सञ्ज्ञा क्रियते। वाक्यविधानामानन्त्यवद् रागविधानामानन्त्येऽपि रागाणां षडेव प्रधानजातयः। षटत्रिंशद्वान्तरजातयः। षड्जग्राम-मध्यग्राम-गान्धारग्रामभेदात्त्रयः स्वरग्रामाः।**[1]

**'रञ्जनाञ्जायते रागे व्युत्पत्तिः समुदाहृता'** इति रागलक्षणं संगीतरत्नाकरग्रन्थे । रञ्जनादेव रागस्य रागसंज्ञा विधीयते। स ध्वनिविशेषो यः स्वरेण वर्णेन च विभूषितः, चित्तमनुरञ्जनं करोति तद् रागः कथ्यते ।

**योऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः।**
**रञ्जको जनचित्तानां स रागः कथितो बुधैः।** इति[3]

शारदातनयेन तु -

**श्रुतिक्रमेणोत्पन्नाः शुद्धरागा इति समीरिताः।**
**भिन्नाधिकाः क्रमभवा गौडरागाः प्रकीर्तिताः।**
**अधिकन्यूनसंसृष्टिमया बेसरसंज्ञिताः।**
**भिन्नन्यूनोपगमनाद्भिन्नरागा इति स्मृताः ।**
**साधारणास्स्युर्व्यत्यस्तभिन्नन्यूनाधिकात्मकाः ।।**[3]

एतेषां पञ्चविधानां शुद्ध-गौड-बेसर-भिन्न-साधारणरागाणां स्वरूपं सङ्गीतरत्नाकरग्रन्थेऽथ च सङ्गीतरत्नाकरस्य कलानिधिटीकायामपि प्रतिपादितं वर्तते।[4]

**ग्रामः** - ग्रामस्य विवेचने मतवैभिन्न्यं प्राप्यते । ओझामहोदयेन त्रयो ग्रामाः मन्यन्ते, तत्रैव सङ्गीतरत्नाकर-भावप्रकाशनग्रन्थयोर्द्वावेव ग्रामौ मन्येते । वस्तुतः ग्रामशब्दः समूहवाचको वर्तते। यथा कुटुम्बिनः सर्वे एकीभूय वसन्ति, तथैव संवादिस्वराणां समूहोऽस्ति ग्रामः, यत्र श्रुतयो व्यवस्थितरूपेण विद्यमाना भवेयुः, अपि च यो मूर्च्छना-तान-वर्ण-क्रमालङ्कारप्रभृतीनामाश्रयः स्यात्। यथा-

1. वर्णसमीक्षा- पृ.,134
2. सुधाकरी टीका- पृ., 3
3. भावप्रकाशनम् - 7/47
4. सङ्गीतरत्नाकरः, रागविवेकाध्यायः,1/4 । कलानिधिटीका, कल्लिनाथविरचिता- पृ. 26,27

**समूहवाचिनौ ग्रामौ स्वरश्रुत्यादिसंयुतौ ।**
**यथा कुटुम्बिनः सर्वे एकीभूय वसन्ति हि ।**
**सर्वलोकेषु सुग्रामो यत्र नित्यं व्यस्थितः।**
**षड्जमध्यमसंज्ञो तु द्वौ ग्रामौ विश्रुतौ किल।।**[1]

सङ्गीतरत्नाकरस्य स्वरगताध्याये शाङ्र्गदेवेनोच्यते - **ग्रामः स्वरसमूहः स्यान्मूर्च्छनादेः समाश्रयः** । इति वस्तुतो द्विधा ग्रामः - षड्जो मध्यमश्चेति । केचनाचार्याः गान्धारमपि ग्रामः स्वीकुर्वन्ति, परं नारदेन तु गान्धारग्रामः स्वर्गस्थित इति मन्यते।[2]

शारदातनयेन तु -

**ध्वनेर्विवक्षावशतो ग्रामभेदप्रकल्पना ।**
**विवक्षयैव रागाणां मूर्च्छना तानकल्पना ।।** इत्युक्तम्।[3]

इत्थं नाट्यशास्त्रीयग्रन्थेषु यथाप्रसङ्गं ग्रामस्य वर्णनं शास्त्रकारैः कृतम्। संस्कृतनाट्येषु चैतेषां सङ्गीतशास्त्रतत्त्वानामुदाहरणं प्रयोगश्च सहजरूपेण दरीदृश्यते।

**मूर्च्छना**- ग्रामनिरूपणानन्तरं वर्णसमीक्षाग्रन्थे मूर्च्छनाया उल्लेखः क्रियते तेन । यथा - **'स्वराणामारोहावरोहक्रमात्मिकाः प्रतिग्रामं सप्तभेदादेकविंशतिसंख्या मूर्च्छनाः ।'**

अर्थात् षड्ज-मध्यम-गान्धारेषु त्रिषु ग्रामेषु प्रतिग्रामं सप्त-सप्तमूर्च्छनाः भवन्ति, इत्थमाहत्य **एकविंशतिः मूर्च्छनाः** स्वीक्रियन्ते । नाट्यशास्त्रे तु **'क्रमयुक्ता स्वराः सप्त मूर्च्छनास्वभिसंज्ञिताः।'** इति। **'मूर्च्छना' शब्दो 'मूर्च्छ' धातोर्निष्पद्यते, यस्याऽर्थोऽस्ति मोहः समुच्छ्रायश्च** । 'मोहोच्छ्रायाभिधायी यो मूर्च्छधातुस्ततो ल्युटि। करणार्थे मूर्च्छनेति पदमत्र समुच्छ्रये'। इति भरतकोशः।

शार्ङ्गदेवेन सप्तस्वराणां क्रमपूर्वकमारोहावरोहं मूर्च्छना इति मन्यते। यथा- **'क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम्। मूर्च्छनेत्युच्यते।'**[4]

शारदातनयेन चतुर्दशविधा मूर्च्छना निरूप्यते। तत्र द्वादशविधा स्वरमूर्च्छना अपि स्वीक्रियते तेन । यथा-

**अन्त्यादिक्रमयोगेन व्यत्ययात्सप्त मूर्च्छनाः ।**
**ग्रामयोरुभयोस्तानत्रये ताः सप्त सप्त च ॥**

1. भरतकोषः, पृ.-189, तिरुपतिसंस्करणम् ।
2. नाट्यशास्त्रस्येतिहासः- पारसमणिद्विवेदी
3. भावप्रकाशनम्- 7/38
4. संगीतरत्नाकरः, स्वरगताध्यायः,पृ.-103-104

**तानत्रये द्वादशभिः स्वरैर्द्वादश मूर्च्छनाः।**
**गतागतीर्वितन्वन्ति तेन तास्तिर्यगायताः॥**[1]

शार्ङ्गदेवेन संगीतरत्नाकरग्रन्थे चतुर्दशविधा मूर्च्छनाः **'शुद्धा- काकली-सहिता-सान्तरा-साधारणकृता'** इति चतुर्धा विभज्यन्ते, तेन षट्पञ्चाशत् मूर्च्छनाः सञ्जायन्ते । गान्धारग्रामस्य मूर्च्छनाः तत्र नोक्ताः, यतो गान्धारग्रमः स्वर्गे एव भवतीति तन्मतम् ।

**तानः** - एकोनपञ्चाशत् तानाः सङ्गीतशिक्षायां भवन्तीत्युक्तम् ओझामहोदयेन । तानलक्षणं तेन नोक्तम् । तान-विषये नाट्यशास्त्रीयग्रन्थेषु सङ्गीतशास्त्रग्रन्थेषु च विशिष्टं विवेचनं प्राप्यते । षाडवौडव-सम्पूर्णेति मतूर्च्छनानां संयोग एव 'तानः' कथ्यते । षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादश्चैते सप्तस्वराः यदा परस्परेण तन्यन्ते तदा ते तानाः कथ्यन्ते। **'तान'** शब्दः 'तनु' विस्तारणे धातोर्निष्पद्यते, यस्यार्थो भवति- विस्तारः। यथा-

**षाडवौडव-पूर्णानां संयोगश्चैव कथ्यते।**
**तनु-विस्तार इत्यस्माद्धातोः कर्मणि तत्र तानसिद्धिः॥**[2]

तत्र तु मूर्च्छना एव ताना इत्यपि प्राप्यते । यथा- **तानाः स्युर्मूर्च्छना शुद्धाः षाडवौडुवितीकृताः।**[3] अत्र चोच्यते टीकाकारेण कल्लिनाथेन - **प्रसङ्गात्क्रमानुक्त्वा मूर्च्छनैक-देश-रूपत्वेन मूर्च्छनाऽनन्तरमुद्दिष्टां शुद्धतानाल्लॅक्षयति ।'**[4]

वस्तुतो मूर्च्छना-तानयोर्न किमपि पार्थक्यमिति विशाखिलमतं मतङ्गेनोद्धृयते । यथा- ननु मूर्च्छना-तानयोः को भेदः? उच्यते मूर्च्छना-तानयोर्नार्थान्तरत्वमिति विशाखिलः।[5]

परं मतङ्गेन विशाखिलमतं तत्र खण्डितम्। यथा-' **एतन्न संगतम्, संग्रहश्लोके मूर्च्छना-तानयोर्भेदस्य प्रतिपादित्वात् । ननु कथं मूर्च्छना-तानयोर्भेदः ? ब्रूमः - आरोहावरोहक्रमयुक्तः स्वरसमुदायो मूर्च्छनेत्युच्यते, तानस्त्वारोहणक्रमेण भवतीति भेद इति।**[6]

इत्थं वर्णसमीक्षाग्रन्थे स्वरसम्बन्धिनः पदार्थान् सङ्गीतशिक्षोपयोगिनः प्राधान्येनोपदेश्यं महर्षिभिरेषा स्वरविद्या यथायथं सुविशदं निरूपिता । अनेन प्रमीयते यत् ग्रन्थोऽयं नाट्यविद्यायै कियदुपयोगि विद्यते। तत्रापि नाट्यप्रयोगाय तु ग्रन्थोऽयं विशेषरूपेण साहाय्यं भजते, यतो नाट्यप्रयोगे सङ्गीतशास्त्रसंबद्धविषयाणामपि प्रचुरप्रयोगो दृश्यते । इत्यलम्।

---

1. भावप्रकाशनम्- 7/41,42
2. संगीतरत्नाकरः, स्वरगताध्यायः
3. तत्रैव- खण्डः,1,1.4.27
4. कलानिधिटीका,पृ.-115
5. सुधाकरीटीका-खण्डः,1पृ.-114
6. सुधाकरीटीका- पृ.,114

ISSN - 0974-8946
अप्रैल-जून 2018

शोधप्रभा
वर्षः 43, द्वितीयाङ्कः

# दायभागविचारः

डॉ. दिनेशकुमारगर्गः*

द्रव्यं विना सांसारिको व्यवहारो न प्रचलति। अतः पित्रादीनां सुवर्णादिद्रव्यस्य के दायादा भवन्ति। पैतृकसम्पत्तौ तेषां कियान्भागो भवति। दायशब्दः किमभिप्रायकः, तत्रोच्यते-यद्धनं स्वामिसम्बन्धादेव निमित्ताद् अन्यस्य स्व भवति, तदेव दायपदेन कथ्यते। स च द्विविधः- अप्रतिबन्धः, स प्रतिबन्धश्च। तत्र पुत्राणां पौत्राणां च पुत्रत्वेन पौत्रत्षेन च पितृधनं पितामह धनञ्च स्वं भवतीति सप्रतिबन्धो दायः। पितृव्य भ्रात्रदीनां तु पुत्राभावे स्वाम्यभावे च स्वं भवतीति सप्रतिबन्धो दायः। एवमग्रसन्ततावपि चिन्तनीयम्। किं नाम विभागः द्रव्य समुदाय विषयाणामनेक स्वाम्यानां तदेकदेशेषु व्यवस्थापनम्। पितृधनेऽनेकभ्रातृषु सत्सु ज्येष्ठस्य मध्यमस्य कनीयसश्च कियान् भागो भवति। तत्र समे समांशिनो भवन्ति, अथवा वैपरीत्यमपि कस्यचिद् भवति। पितरि सति पुत्राणां दायोऽस्ति नवा। अविभाज्यं धनं किम्। मातु रंशः कः। कस्यचिद् जनस्य चेद् एकाधिकाः पत्न्यो भवन्ति, तर्हि, तत्पुत्राणां कीदृशः सम्पतेर्विभागो विधेयः। अपुत्रवतो धनं को ग्रह्णाति। यतिब्रह्मचारिवाण्यप्रस्थानां सम्पत्तीनां केऽधिकारिणः। किमस्ति स्त्रीधनं, तस्य के भवन्त्युत्तराधिकारिणः। एते समे विषयाः दायविभागमभिलक्ष्य मनुशुक्रकौटिल्ययाज्ञवल्क्यादिभिरर्थशास्त्राचार्यै निरूपिताः।

तत्र स्त्रीधनस्य केऽधिकारिणो भवन्ति। अत्र विषये प्रथमत आचार्यः कौटिल्यो ब्रूते-"अदायादा भगिन्यो मातुः परिवापाद् भुक्तकांस्याभरणभागिन्यः"[1] अर्थात् मातुः सम्पत्तौ प्राचीनकांस्यपात्राणि, तदाभूषणानि च दुहितरो हरेयुः। अत्र याज्ञवल्क्यः - "अप्रजस्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि। दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत्" अत्र मिताक्षराकारो ब्रूते- चतुर्ष्वपि ब्राह्मदैवार्षि प्राजापत्येषु विवाहेषु प्रसूतापत्यवती चेद् दुहितॄणां तद्धनं भवति ताश्च दुहितरो विवाहिता अविवाहिता वा भवेयुः। अत्र विषये मनोर्मतं किञ्चिद् वैपरीत्य मादधाति तेनोच्यते-अविवाहिता या पुत्री सैव धनं प्राप्तुं शक्नोति' यथा- 'मातुस्तु यौतकं यत् स्यात् कुमारी भाग एव सः।' अत्र कुमारी त्वनूढाऽभिव्रेता। अत्र गौतमो वदतिस्त्रीधनं दुहितृणामदत्तानामप्रतिष्ठितानाञ्चेति। शुक्राचार्यमते तु स्त्रीधनं मातुरिच्छाऽधीना, सा कन्यायै

---

* सहाचार्यः, प्राचीनराजशास्त्रार्थशास्त्रविभागः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी।

1. कौ. अर्थ.-03/62/06
2. याज्ञ.स्मृ.- व्यवहार. 145
3. मनुस्मृ. 09/131

पुत्राय वा कस्यैचिदपि दातुं सक्नोति। अत्राह- "सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते।"[1] अच सौदायिक शब्दः विवाहिताया अविवाहिताया वा पत्युः पितृगृहाच्च पद् धनं प्राप्यते तदेव सौदायिकं धनं भवति।

**अपुत्रस्य दायभाजः के भवन्ति-**

अत्र आचार्यः कौटिल्यो ब्रूते- अपुत्रस्य द्रव्यं सौदर्याः भ्रातरः, सहजीविनः, एवकोदरजा भ्रातरः संसृष्टिनः हरेयुः/कौ0 अर्थ0 तृ0 5 अध्याये।

**पौत्रदौहित्रयोर्भेदाभावः-**

अत्र आचार्यः मनुः ब्रूते-

**पौत्रदौहित्रयो लोके न विशेषोऽस्ति धर्मतः।**
**तयोर्हिमातापितरौ सम्भूतौ तस्य देहतः।।**[2]

अर्थात् पौत्रपौत्रिकेययोर्लो के धर्म ख़त्ये न कश्चिद् विशेषोऽन्ति। यस्मात् तमोः मातापितरौ तस्य देहात् उत्पन्नाविति।

**जीवतिपितरि कथं विभागः कार्यः-**

जीवद् विभागे- पिता नैनं विशेषयेत् पुत्रेषु एकतममधिकांशेन वा न्यूनांशेन वा न योजयेत्। किन्तु समेनैवांशेन सर्वान् योजयेत्। एकं पुत्रं, अकारणात् बिना निमित्तं, न निर्विभजेत, निरंशं न कुर्यात्। पितुरसत्यर्थे पितृधनाभावे, ज्येष्ठाः पुत्राः कनिष्ठान् अनुगृहीयुः, अन्यत्र मिथ्या वृत्तेभ्यः कनिष्ठाः चेत् मिथ्या वृत्ता न भवन्ति।[3]

**कतिविधाः पुत्राः, तथा के च दायभागाः भवन्ति।** अत्र मनुनोच्यते-

**पुत्रान् द्वादश यानाहनृणां स्वायंभुवोमनुः।**
**तेषां षड्बन्धु दायादाः षडदायादबान्धवाः।।**[4]

यान् द्वादशपुत्रान् हैरण्यगर्मो मनुराह- तेषांमध्यादाद्याः षड्बान्धवाः गोत्रदायादाश्च तस्माद् बान्धवत्वेन सपिण्ड समानोदकानां पिण्डोदकदानादि कुर्वन्ति, अन्तराभावे च गोत्र दायादं गृह्णन्ति, पितृ रिक्थभाक्त्वस्य "पुत्रारिक्थहराः पितुः"[5] इति द्वादश विध पुत्राणामेव वक्ष्यमाणत्वात् उत्तरे षट् न

1. शुक्रनी. 4/298
2. मनु. 9/133
3. कौ0 अर्थ0 तृतीयाधिकरणे 5 अध्याये
4. मनु0 9/138
5. मनु0- 9/185

गोत्रधनहरा भवन्ति। बान्धवास्तु भवन्ति, ततश्च बन्धुकार्यमुदक्रियादि कुर्वन्ति। मेधातिथिस्तुषड-दायादबान्धवाः" इत्यायुत्तरषड्कस्यादायादत्वम बान्धवत्वं च आह। तत्र- बौधायनेन बन्धुत्वस्याभि हितत्वात्। तदाह कानीनं च सहोढं च क्रीतं पौनर्भवं तथा। स्वयदत्तं विषादं च गोत्रभाजः प्रचक्षते के भवन्ति दायादाः अत्र आचार्योब्रूते-

**औरसः क्षेत्रजश्चैव दत्तः ख्रत्रिम एव च।**
**गूढोत्पकोऽप विद्धश्च दायादा बान्धवाश्च षट्॥[1]**

औरसादयो षड्रिक्थभाजो बान्धवाश्च भवन्ति।

अदायादाः के भवन्ति-

**कानीनश्च सहोढश्च क्रीतः यौन र्भवस्तथा।**
**स्वयं दत्तश्च शौद्रश्च षडदायादबान्धवाः॥[2]**

कानीनः= कन्यापुत्रः, सहोढः क्रीतः, पौनर्भवः (विधवा पुत्रः), स्वयं दत्तः एवं शौद्रश्च, एते षट्विधा पुत्रा अदापादा भवन्ति, बान्धवाश्च भवन्ति। अत्र औरसेन सह क्षेत्रकादीनां पाठातुल्यत्वाशङ्कायां तन्निराशार्थमाह- तृषाणिनिर्मित- कुत्सितोडुपादिरुदकं तरन्, यथा विधं ग्लं प्राप्नोति, तथा विधवेन कुपुत्रैः दो त्रऽारिभिः पारलौकिकं दुखं दुरुत्तर प्राप्नोति, इत्यनेन क्षेत्र जादीनां मुख्यमौरसपुत्रवत्संपूर्ण कार्यकारण क्षमत्वं न भवति और सक्षेत्रजयोः मध्ये धनाधिकारी को भवतीत्मुच्यते-

**यद्यकेरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ।**
**यस्य यत्पैतृकं रिक्थं स तद् गृह्णीत नेतरः॥[3]**

अत्र याज्ञवल्क्योऽपि ब्रूते-

**अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः।**
**उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः॥[4]**

यदा क्षेत्रीयस्य पितुः क्षेत्रजानन्तमौरसः पुत्रो भवति, तदा तावौर सक्षेत्रजौ एकरिक्थिनावेकस्य पितुः यद्यपि रिक्थार्हौ भवतस्तथापि यद्यस्य जनक- सम्बन्धि तदेव स गृह्णीयात् नाक्षेत्रजः क्षेत्रिकपितुः। यतु वक्ष्यति 'षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात् पैतृकाद्धनात्।

औरसवर्गे विभजन् दायम्[5] इति तु तत्पुत्रबहुलस्य यत्तु याज्ञवाल्क्येनोभय संबन्धि रिक्थहस्तमुक्तं

1. मनु. 9/159
2. मनु. 9/160
3. मनु. 9/162
4. या.स्मृ. 3/127
5. म.स्मृ.-9/164

तत्क्षेत्रिकपितु रौरसपुत्राभावे ज्ञातव्यम्। "मेधातिथि गोविन्द राजौ तु औरसमनियुद्रापुत्रं च विषयोख्रत्येमं श्लोकंव्या च क्षाते- तत्र- अनियुद्रा पुत्रस्या क्षेभजत्वात्। अनियुद्रासुतश्च[1] इत्यनेन तस्य रिक्तग्रहणनिषेधात्। "यद्येकरिक्थिनौ" इत्यनन्वयाच्च।

वस्तुतः पितुः धनस्य कः स्वामी, अत्र विषये आचार्यो मनुरब्रवीत्-

**एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः।**
**शेषाणामानृशंस्यार्थं प्रददात्तु प्रजीवनम्।।[2]**

अर्थात्व्याध्यादिना प्रथमौरसपुत्राभावे क्षेत्रजादिषु वृतेषु पश्चादौषधादिना विगत व्याधेरौरस उत्पके सतीरमुच्यते, औरस एवैकः पुत्रः धनस्वामी। शेषाणां क्षेत्रजव्यतिरिक्तानां तस्य षष्ठांशादेववक्ष्यमाणत्वात् पापसंबन्धपरिहारारार्थ ग्रास्यच्छादानं दद्यात्। क्षेत्रजस्यख्रते तु षष्ठांशं पञ्चमाशंवा औ रस पुत्रः दद्यात्।

**औरसादीनां पुत्राणां विषये स्पष्टी क्रियते-**

**औरसपुत्रः**- स्वभार्यायां कन्याऽवस्थायां ख्रतविवाहसंस्कारायां यं स्वमुत्पादयेत्तं पुत्रामौरसं विद्यात्। उक्तञ्च 'सवर्णायां संस्ख्रतायामुत्पादितमौरसपुत्रं विद्यात्।' इति बोधायनदर्शनात् सजातीयायामेव समुत्पादित औरसः ज्ञेयः।[3]

**क्षेत्रजः पुत्रः**- यो मृतस्य नपुंसकस्य प्रसव विरोधि व्याध्युपेतस्य वा भार्यायां घृताक्त्वादिनियोग धर्मेण[4] गुरु नियुद्रायां जातः स क्षेत्रजः पुत्रो भवति।[5]

**दत्तकपुत्रः**- शुक्रशोणित संभवः पुरूषो माता पितृ निमितमः तस्य प्रदान विक्रय परित्यागषु माता पितरौ प्रभवतः" इति वशिष्ठस्मरणात् माता पिता वा परम्परानुज्ञया इमं पुत्रं परिग्रहीतुः समान जातीयं तस्यैवपुत्राभाव निमित्ताणामापादिव्रीतियुद्रं न तु भयादिना उदकपूर्व दद्यात् स दत्यिमाख्यः पुत्रो भवति।[6]

**ख्रत्रिमः पुत्रः**- यं पुनः समान जातीय पुत्रियोः पारलौकिश्रद्धादिकरणाभ्यां गुण दोषौ भक्त इत्येवमादिज्ञं, पुत्रगुणैश्च मातापित्रोराराधनादियुद्रं पुत्रं कुर्यात् स ख्रत्रिम व्यः पुत्रो ज्ञेयः।[7]

**गूढः**- यस्य गृहेऽवस्थितायां भार्यायां पुत्र उत्पद्यते, सजातीयोऽयं भवतीति ज्ञानेऽपि कस्मातयुरूष विशेषाड जातोऽसौविति न ज्ञायते, स मृतेऽ प्रकाशमुत्पनास्तस्य पुत्रः स्याद् यदीयायां भार्यायां जातः "गुढ" इति।[8]

---

1. मनु. 9/143
2. अनु. 9/163
3. मनु. 9/167
4. मनु. 9/51-62
5. मनु. 9/167
6. मनु. 9/162
7. मनु. 9/169
8. मनु. 9/170

**अपविद्धः-**

मातापितृभ्यां व्यद्रं तयोरन्यतरमरणेनान्यतरेण वा व्यक्तं पुत्रं यः स्वीकुर्यात् सः "अपविद्धाख्य पुत्रः कथ्यते।"[1]

**कानीनः-**

पितृगृहे कन्या यं पुत्रम प्रकाशं जनयेत्तं कन्यापरिणेतुः पुत्रं नाम्ना कानीनं वदेत्।[2]

**सहोढः- या गर्भवती अज्ञातगर्मा ज्ञातगर्भावा परिक्षीयते,**
**स गर्भस्तस्यां जातः परिणेतु पुत्रो भवति, स "सहोढ" इति कथ्यते।**[3]

**क्रीतकः**- यः पुत्रार्थं मातापित्रोः सकाशाद् यं क्रीणीयात् स "क्रीतकः" पुत्रः भवत्ति।[4]

**पौनर्भवः**- या भर्त्रा परित्यक्ता मृतभर्तृका वा स्वेच्छयान्यस्य पुनर्भार्या भूत्वा यमुत्पादयेत् स उत्पादकस्य पौनर्भवः पुनः कथ्यते।[5]

**स्वयंदत्तः**- यो मृत माता पितृकस्त्योगोचित कारणं विना द्वेषादिना तथ्यांत्यद्रोवाऽऽमानं यस्मैददाति स स्वयं दत्तास्यः तस्य पुत्रः भवति।[6]

अतोऽन्ते कथितुं शक्यते यत् पितुः धनस्याधिकारिणा सोररभ्रातरः, पितरः न भवन्ति, अपितु औरसा भावे क्षेत्रजादयो गौणपुत्राः पितृरिक्थहराः भवन्ति। "और सस्य तु "एक एवौरसः पुत्रः"[7] इत्यनेन सिद्धत्वात्। अविद्यमान मुख्य पुत्रस्य पत्नीदुहितृ रहितस्य च पिता धनं गृह्णीयात्तेषां मातुश्चाभावे भ्रातरो धनं गृह्णीयुः। एवमुक्त्वा विस्तरभिया नाधिकमुच्यते। एवं मनुस्मृतौ, याज्ञवल्क्यस्मृतौ कौर्टलीयार्थशास्त्रे च दायभागविषये विविधाः पक्षाः चर्चिताः वर्तन्ते। ततः एवं किञ्चदुद्धृत्य मया एष विचारः प्रकटीकृतः। इतिशम्।

---

1. मनु.- 9/171
2. मनु.- 9/172
3. मनु.- 9/173
4. मनु.- 9/179
5. मनु.- 9/175
6. मनु.-9/177
7. मनु.-9/163

ISSN - 0974-8946
अप्रैल-जून 2018

शोधप्रभा
वर्षः 43, द्वितीयाङ्कः

# बृहत्त्रय्यां नैषधीयचरितस्य वैशिष्ट्यम्

डॉ. जीवनकुमारभट्टराई*

संस्कृतसाहित्ये महाकाव्यानां स्थानम् अद्वितीयमस्ति। सुविस्तृतसंस्कृतसाहित्यजगति नैके कवयः महाकाव्यरचनां कृतवन्तः, तेषु महाकाव्येषु पञ्चमहाकाव्यानि सुप्रसिद्धानि वर्तन्ते। ते सन्ति- रघुवंशम्, कुमारसम्भवम्, किरातार्जुनीयम्, शिशुपालवधम्, नैषधीयचरितञ्च। एतेषु पञ्चमहाकाव्येषु भारविविरचितं किरातार्जुनीयम्, माघेन विरचितं शिशुपालवधम्, श्रीहर्षविरचितं नैषधीयचरितमिति त्रयं **बृहत्त्रयी** नाम्ना व्यवह्रियन्ते। किरातार्जुनीये अष्टादश-सर्गाः, शिशुपालवधे विंशति-सर्गाः, नैषधीयचरिते द्वाविंशति-सर्गा इति द्वाभ्यां द्वाभ्यां सर्गाभ्यामत्र वृद्धिः दृश्यते।

'त्रयाणां समाहारः त्रयी, बृहती च सा त्रयी बृहत्त्रयी' इति। अत्र त्रयी शब्दस्य सार्थकता विद्यते। स्वरूपेण, विषयेण आलङ्कारिकतत्त्वैश्च विशिष्टानि काव्यानि बृहत्त्रयी नाम्ना व्यपदिश्यन्ते। बृहत्त्रयाः समग्राध्ययनेन पाठकः वैदिकसाहित्यम्, षड्दर्शनानि, धर्मशास्त्रम्, नीतिशास्त्रम्, राजनीतिशास्त्रम्, कामशास्त्रम्, पुराणानि, काव्यालङ्कार-नाट्यशास्त्राणि, काव्यरचनाविधानं च नूनं समधिगच्छति।

बृहत्त्रय्याम् अन्यतमं स्थानं वरीवर्ति नैषधीयचरितमहाव्यम्। श्रीहर्षस्य नैषधीयचरितं विविधशास्त्राणां समन्वयकः ग्रन्थो वर्तते। महाकाव्यस्यास्य अनुपम-वैदुष्यप्रभावात् 'नैषधं विद्वदौषधमिति' आभाणकं प्रसिद्धम्, नैकशास्त्रपाण्डित्यमत्र परिस्फुरति। नैषधीयचरिते विप्रलम्भस्य प्रभूतं वर्णनमुपलभ्यते। एकनारीव्रतस्य नलस्य पतिव्रतायाः दमयन्त्याश्च वर्णनं कुर्वता कविना श्रीहर्षेण दमयन्त्योः अन्योन्यमैत्रीं प्रति निष्ठा प्रदर्शिता। महाकाव्येऽस्मिन् प्रतिपदं लालित्यमवलोक्यते, प्रसादमाधुर्यगुणाभ्यां साकं पदसौकुमार्यं विचित्रमाभां प्रदर्शयति। तदेव दृष्ट्वा केचन ''नैषधे पदलालित्यमि''त्यपि उद्घोषयन्ति। रमणीयतदुदाहरणमेकं यथा-

**अहो अहोभिर्महिमा हिमागमेऽप्यभिप्रपेदे प्रथितां स्मरार्दिताम्।**
**तपर्तुपूर्तावपि मेदसां भरा विभावरीभिर्विभरां बभूविरे।।**[1]

---

* प्रूफसंशोधकः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-16

1. नै. 1/41

अत्र स्वपाण्डित्यप्रदर्शनक्रमे प्रतिपदं क्लिष्टत्वं दुरूहता च प्रतिफलः। विविधशास्त्र- सिद्धान्तवर्णनात् श्लिष्टक्लिष्टपदप्रयोगात् बहुज्ञताप्रदर्शनाच्च काव्येऽस्मिन् व्युत्पत्तिप्रभवता स्पष्टीभवति। अनेके विषयाः व्याकरण-न्याय-वैशेषिक-सांख्य-योग-वेदान्त-मीमांसा-चार्वाक- बौद्ध-जैन- राद्धान्ता प्रतिपादिताः अत्र। तस्मात्कारणात् तदर्थावगमः प्रायः दुष्कर एव।

**किञ्चिदत्र प्रस्तूयते-**

**"अपवर्गे तृतीया"**[1]इति सूत्रम् अपवर्गो नाम मोक्षः। तस्मिन् तृतीया प्रकृतिः भवति। अर्थात् स्त्रीपुंसातिरिक्ता क्लीबप्रकृतिरेव मोक्षे प्रवृत्ता भवति इति चमत्करोति। मोक्षेऽधिकाराभावाद् ब्रह्मचर्यपरित्यागेन काम एव सेवनीय इति शब्दच्छलेन बृद्धसम्मत्या स्वीयं मतम्-

**उभयी प्रकृतिः कामे सज्जेदिति मुनेर्मनः।**
**अपवर्गे तृतीयेति भणतः पाणिनेरपि॥**[2]

यथा वा-

**स्वं च ब्रह्म च संसारे मुक्तौ तु ब्रह्म केवलम्।**
**इति स्वोच्छित्तिमुक्त्युक्तिवैदग्धी वेदवादिनाम्॥**[3]

वेदान्तदर्शनानुसारं मुक्तौ जीवः ब्रह्मणि विलीयते, ब्रह्मैव केवलमवशिष्यते। लोके तु जीवब्रह्मणो द्वयोरेव पार्थक्यम्। तत् मूखवत् स्वास्तित्वविनाशाय कथितमिव भाति? इति विवृणोति।

**नैयायिका उपहसिता-**

**मुक्तये यः शिलात्वाय शास्त्रमूचे सचेतसाम्।**
**गोतमं तमवेक्ष्यैव यथा वित्थ तथैव सः॥**[4]

**वैशेषिकाः दूषिता यथा-**

**ध्वान्तस्य वामोरु! विचारणायां वैशिषिकं चारु मतं मतं मे।**
**औलूकमाहुः खलु दर्शनं तत्क्षमं तमस्तत्त्वनिरूपणाय॥**[5]

काव्यकलादृष्ट्या सा मनोरमा रचना भवति। कल्पनायां पराकाष्ठा, उत्प्रेक्षाणां मनोरमा छटा विद्वत्तायाः मञ्जुलः सन्निवेशः इत्यादिभिर्गुणैः काव्यमिदमद्वितीयं भवति।

अत्रत्यं कथावस्तु महाभारतात् स्वीकृता। महाकाव्येऽस्मिन् कथानकमेवं भवति-

---

1. अ. 2/3/6
2. नै. 17/70
3. नै. 17/74
4. नै. 17/75
5. नै. 22/35

''राजनि नले दमयन्त्यानुरक्ते सति दमयन्तीचिन्तया इयमाने स्वारामं पर्यटयति सति तेन हंसो गृहीत: दमया मुक्तश्च। स एव प्रत्युपकारभावनया नलस्य स्तुतिं दमयन्तीसमक्षं करोति तस्याऽपि पूर्वरागो जायते। तस्या: पिता विदर्भराज: स्वयंवरमाचरयति। दमयन्तीं कामयमाना: देवा अपि तत्र आयान्ति। धृतनलस्वरूपा: चत्वार: इन्द्र-यम-वायु-कुबेरा: पञ्चमो नलश्च। इदमेव पञ्चनलीयमिति कथ्यते। सर्वेषां समरूपतया दमयन्ती विचित्रां दशामनुभवति। सभावर्णनाय आगता सरस्वती अपि श्लिष्टभाषया तां भ्रामयत्यपि। अवसाने दमयन्त्या: पातिव्रत्येन दृढानुरागेण च प्रभाविता: देवा:स्वानि विशिष्टचिह्नानि प्रकटीकुर्वन्ति। तेन तया नल परिचितो भवति। जाते च पाणिग्रहे कलिप्रवेश: तस्य शान्तिश्च जायते। अन्ततो गत्वा नलदमयन्त्ययो: पुन: समागमेन ग्रन्थ: परिसमाप्यते।''

अस्य सरसा वर्णनपद्धि:शृङ्गारकथा च सचेतसां मनांसि आकर्षयति।

**श्रीहर्षस्य पाण्डित्यम्-**

संस्कृतसाहित्यस्य दैदीप्यमाननक्षत्रस्य महाकविश्रीहर्षस्य जीवनपरिचयविषये विदुषां मतैक्यं नास्ति। केचन तु तं कश्मीरदेशीयम्, केचन बङ्गदेशीयम्, अपि च केचन कान्यकुब्जप्रदेशीयमिति निर्धारयन्ति। द्वादशशतकमध्यवर्ती श्रीहर्ष: कान्यकुब्जाधीशस्य विजयचन्द्रस्य च सभायां सभापण्डित: आसीत्। तथा च प्रसिद्धिरस्त्येव-

**''ताम्बूलद्वयमासनं च लभते य: कान्यकुब्जेस्वरात्।।'' इति।**

अयं श्रीहीरमामल्लदेव्यो: कुमार:। श्रीहीर: न्यायशास्त्रविदुष: उदयनाचार्यस्य हस्ते शास्त्रवादे पराजित:। मरणसमये पितुरादेशानुसारं गङ्गानदीतीरे एकवर्षं यावत् चिन्तामणिमन्त्रं जपायेति, त्रिपुरसुन्दरीदेवी प्रकटीभूय तस्मै अपूर्वां प्रतिभां प्रसारयामासेति। तत: पण्डितसभायाम् अयं शास्त्रार्थसभायाम् उदयनाचार्यं पराजिग्ये इति ऐतिह्यं लोके प्रसिद्धम्। श्रीहर्ष: नैषधीयचरितनामकं पाण्डित्यपूर्ण-महाकाव्यं रचयामास, अनेन स नरभारती इति विरुदमवाप। माहाकविश्रीहर्ष: विद्वत्कवि: महान् तार्किकश्च। अस्य कवित्वप्रतिभया सुलभकाव्यकलादृष्ट्या च नैषधमहाकाव्यं भारत्या: मनोरमभूषणमिति उच्यते। कल्पनानां पराकाष्ठा, उत्प्रेक्षाणां मनोहरच्छटा विद्वत्ताया: मञ्जुलसन्निवेश इत्यादीनामनेकेषां गुणानामाकारात्मकोऽयं ग्रन्थ: काव्यजगति सुधा इव प्रतिभाति। महाकवे: शब्दच्छटाया निदर्शनमिदं स्वयंवरवर्णनम्-

**तत्रावनीन्द्रचयचन्दनचन्द्रलेपनेपथ्यगन्धवहगन्धवहप्रवाहम्।**
**आलीभिरापतदनङ्गशरानुसारी संरुध्य सौरभमगाहत भृङ्गवर्ग:।।**[1]

यथैव श्रीहर्षस्य दर्शनग्रन्थस्य खण्डनखण्डखद्यस्य अद्वितीयं स्थानं तथैव अस्य नैषधीयचरितस्यापि महनीयं स्थानं विद्यते। शास्त्रे काव्ये च अद्वितीया स्थितिरत्र दृश्यते। तथा च कविना स्वयमेव कथितम्-

1. नै. 11/5

**साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले**
**तर्के वा मयि सम्विधातरि समं लीलायते भारती।**
**शय्या वास्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता**
**भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम्।।**

श्रीहर्षः यथा एकः महान् दार्शनिकः कविः तथैव स एकः साक्षात् योगी अपि। यथोक्तं स्वयमेव कविना-

**यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम्।**

श्रीहर्षस्य कविता रसरपद्धत्या प्रचलति परं मध्ये-मध्ये दार्शनिकतत्त्वान्युपन्यस्य तेन जटलीकृता। तदेव स्पष्टयति कविः-

**ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया**
**प्राज्ञंमन्यमना हठेन पठिती मास्मिन्खलः खेलतु।**
**श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-**
**त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः।।**[8]

देवभाषासाहित्यस्य ह्रासयुगे ग्रन्थोऽयम् उदितस्सन् तत्साहित्यं पोषयामास इति अस्य ग्रन्थस्य बृहत्त्ववैशिष्ट्यं सिद्ध्यति।

नलकथाधाराणि, नलोदय-नलाभ्युदय-दमयन्तीकथा-दमयन्तीपरिणय-राघवनैषधीय-कलि-विडम्बन-नलचरितसहृदयनन्दादीनि सर्वाण्यपि काव्यानि नैषधीयचिरतकाव्येन निरस्तीकृतानीत्यपि अस्य काव्यस्य रमणीयत्वे बृहत्त्वे च प्रमाणम्।

यद्यपि नैषधीयचरितं सीमबद्धताया अभावात् काठिन्यादेकस्यैव शब्दान्तराणाम् आवर्तनाच्च माघकिरातार्जुनयोरपेक्षया न्यूनमर्यादं मन्तव्यं भवति, तथापि नैषधीये स्थितं रसोल्बणत्वं सर्वमतिशय्य वर्तते। इदमपि अस्य काव्यस्य बृहत्त्वसाधकं भवति।

नैषधमहाकाव्यमपूर्णमित्यपि केचन पाश्चात्यसमालोचका वदन्ति। यतः नलदमन्तीविवाहपर्यन्तमेव नलकथा अत्र वर्णिता परं पूर्ण काव्यं कविना लिखितं स्यात् तदत्र नोपलभ्यते इति तेषां पक्षः। श्रीकृष्णमचारीमतानुसारं काव्यमिदं विंशाधिकैकशतसर्गात्मकं स्यादिति ज्ञायते।

बृहत्त्रय्यां भारविमाघयोः काव्यद्वये विद्यमानचित्रकाव्यच्छटात्वत्र नोपलक्ष्यते। सन्दर्भेऽस्मिन् नैषधीयचरितस्य हस्तलिखिताग्रतो भागः रामगोपालस्मृतिभूषणमहोदयेन दृष्टः। यतः सार्धश्लोकः तेन उधृतश्च-

**वदन्ति चेच्चन्द्रमसं सुधारसं न पीयते तैः किं नायिकाधरः।**
**सुरापगाम्भः पिबता जनेन किं रसोत्तरं नीरधिनीरमुच्यते।।**
**उत्तुङ्गस्तनपर्वतादवतरन्तदङ्गे हारावली रोमालिं प्रतिपद्यते।।**

1. नै. 22/152

कृष्णमचारीमतानुसारं वाङ्गलायां नैषधस्य शेषभागस्य उपलब्धेराशाप्यस्ति। तदेतल्लभ्यते चेत् संस्कृतसाहित्यस्य श्रीवृविद्धिर्भवेदेव।

नैषधमहाकाव्ये नारीस्वरूपवर्णनमत्यन्तं रमणीयमस्ति। चन्द्रोपलम्भस्तु संस्कृतसाहित्ये इतोऽपि हृदयावर्जकम्, ततोऽपि श्रीहर्षस्य कथोपकथनचातुर्यवैशिष्ट्यम्। तेषु कतिपयानि निदर्शनान्यत्र प्रस्तूयन्ते-

**मयाङ्ग! पृष्टः कुलनामनी भवानमू विमुच्यैव किमन्यदुक्तवान्।**
**न मह्यमत्रोत्तरधारयस्य किं ह्रियेऽपि सेयं भवतोऽधमर्णता।।[1]**

यथा वा-

**वृथा कथेयं मयि वर्णपद्धतिः कयानूपूर्व्या समकेति केति च।**
**क्षमे समक्षव्यवहारमावयोः पदे विधातुं खलु युष्मदस्मदी।।[2]**

अन्येऽपि शास्त्रसम्मतविविधतर्काः काव्येऽस्मिन् यत्र तत्र कविना सप्रयासं समाविष्टाः। यथा हि कवेरुत्प्रेक्षच्छटा नितान्तं हृदयावर्जका-

**यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापनलधूममञ्जिम।**
**तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीभवदङ्कतां विधौ।।[3]**

अपि च-

**वैदर्भीकेलिशैले मरकतशिखरादुत्थितैरंशुदर्भैः**
**ब्रह्माण्डाघातभग्नस्यदजमदतया ह्रीधृतावाङ्मुखत्वैः।**
**कस्या नोत्तानगाया दिवि सुरसुरभेरास्यदेशं गताग्रैः**
**यद्गोग्रासदानव्रतसुकृतमविश्रान्तमुज्जृम्भते स्म।।[4]**

पद्येऽस्मिन् ओजगुणोऽपि विलसति। दानमाहात्म्यवर्णनमपि पञ्चमे सर्गे अतीवसुन्दरतया प्रस्तुतं कविना-

**दानपात्रमधमर्णमिहैकग्राहि कोटिगुणितं दिवि दायि।**
**साधुरेति सुकृतैर्यदि कर्तु पारलौकिककुसीदमसीदत्।।[5]**

**गणितशास्त्रपरिभाषया अपह्नवो यथा-**

**तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदा यदा।**
**तनोति भानोः परिवेषकैतवात्तदा विधिः कुण्डलनां विधोरपि।।[6]**

1. नै. 9/3
2. नै. 9/9
3. नै. 1/8
4. नै. 2/105
5. नै. 5/92
6. नै. 1/14

विप्रलम्भश्रृङ्गारेऽपि श्रीहर्षः नितरां दक्षः। प्रकृतिचित्रणमपि श्रीहर्षेण उद्दीपनविभावमुखेनैव लक्ष्यते। तस्य व्यञ्जनावधानमपि प्रशंसनीयम्। यथा हि-

**किमसुभिर्ग्लपितैर्जड! मन्यसे मयि निमज्जतु भीमसुतामनः।**
**मम किल श्रुतिमाह तदर्थिकां नलमुखेन्दुपरां विबुधः स्मरः॥[1]**

वेदानां मतमण्डने तद्भिन्नमतखण्डने च श्रीहर्षस्य जटिलः प्रयासः श्लाघनीयः। एवं विप्रलम्भशृङ्गारनिर्वाहेऽपि श्रुतिवाक्यमानीय वर्णयति। तस्य पदलालित्यं तु सर्वेषां हृदयाह्लादकारमेव-

**नलिनं मलिनं विवृण्वती पृषतीमस्पृशती तदीक्षणे।**
**अपि खञ्जनमञ्जनाञ्चिते विदधाते रुचिगर्वदुर्विधम्॥[2]**

यथा वा-

**निविशते यदि शूकशिखा पदे सृजति कियतीमिव व व्यथाम्।**
**मृदुतनोर्वितनोतु कथं न तामवनिभृत्तु निविश्य हृदि स्थितः॥[3]**

भैम्याः स्वरूपवर्णनप्रसङ्गे श्रीहर्षस्य पाण्डित्यं यथा-

**नमः करेभ्योऽस्तु विधेर्न वास्तु स्पृष्टं धियाप्यस्य न किं पुनस्तैः।**
**स्पर्शादिदं स्याल्लुलितं हि शिल्पं मनोभुवोऽनङ्गतयानुरूपम्॥[4]**

प्रथमसर्गे नलेन हंसग्रहणप्रसङ्गे हंसस्य करुणां गिरमाकर्ण्य कस्य वा सचेतसः अश्रुपातो न जायते। करुणरसस्य रमणीयं पद्यमिदम्-

**मुहूर्तमात्रं भवनिन्दया दयासखाः सखायः स्रवदश्रवो मम।**
**निवृत्तिमेष्यन्ति परं दुरुत्तरस्त्वयैव मातः! सुतशोकसागरः॥[5]**

इत्थं निष्कर्षतया वक्तुं शक्यते यत् संस्कृतसाहित्ये बृहत्त्रय्यां श्रीहर्षप्रणीतस्य नैषधमहाकाव्यस्य अन्यतमं स्थानं विद्यते।

## सन्दर्भितग्रन्थाः


1. अष्टाध्यायी
2. नैषधीयचरितम्, श्रीहर्षः, नारायणीटीका, मेहरचन्द लछमनदास पब्लिकेशन्स, 1986
3. नैषधीयचरितम्, श्रीहर्षः, मल्लिनाथटीका, चौखम्भा सुरभारती प्रकाशन, वाराणसी, 2010
4. नैषधपरिशीलन, चण्डिकाप्रसादशुक्लः, चौखम्भा सुरभारती प्रकाशन, वाराणसी, 1995
5. बृहत्त्रयीपरिशीलनम्, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली, 2012


---

1. नै. 4/52
2. नै. 2/23
3. नै. 4/11
4. नै. 10/126
5. नै. 1/136

ISSN - 0974-8946
अप्रैल-जून 2018

शोधप्रभा
वर्षः 43, द्वितीयाङ्कः

# न्यायदर्शनदिशा विध्यर्थविवेकः

श्रीछबिलालन्यौपाने

**विधेः स्वरूपं प्रामाण्यं विभागश्च -**

***वेदग्रन्थेषु विधिमन्त्र-नामधेय-निषेधार्थवादात्मकाः पञ्च प्रकारकाः विभागाः समुपलभ्यन्ते।*** एतेषां पञ्चानां प्रकाराणां समष्ट्या ***''मन्त्रब्राह्मणयोर्नामधेयम्''***[1] इत्यापस्तम्बोऽसूत्रयत्। ब्राह्मणवेदेन उल्लिख्यमानेषु ग्रन्थेषु विधिना सह नामधेय-निषेधार्थवादानामवस्थितिः। तत्र मन्त्राणां स्वातन्त्र्येण कार्यं न वर्तते। न हि मन्त्राः पदतदर्थावबोधाय अधीयन्ते। किन्तु विधिवाक्यैर्विहितानां कर्मसु च समवेतानां द्रव्य-देवतादीनां स्मारणमेव तेषां कार्यम्। ततश्च विधिवाक्यैः सह मन्त्राणां सम्बन्ध एष्टव्यः। विना विधिवाक्यसम्बन्धो मन्त्राः अनुपयोगिनो भवन्ति। कयापि अलौकिकशक्त्या निरतिशयमानेन वा मन्त्राः महर्षिभिरधिगताः। ***''मननाम्नञ्च''*** इति यास्कः। एतादृशाणां मन्त्राणां सम्बन्धस्तादृश्येण केनचन पदार्थेन वक्तव्यो यश्च निरतिशयव्यापारद्वारा महर्षिभिरधिगतः। स एव ग्रन्थो ब्राह्मणशब्देन व्यपदिश्यते। महर्षयो मननेन अवाप्तान् मन्त्रान् सम्प्राप्य तेषां विनियोगः कुत्र भवितुमर्हतीति नैरन्तर्येण चिनुयन्तो ब्राह्मणभागान् अपि समवाप्तवन्तः। अत एव आपस्तम्बः ***''मन्त्रब्राह्मणयोर्वेदनामधेयम्''*** इत्यभिदधे।

एवञ्च पृथक् पृथगवाप्तानां मन्त्राणां ब्राह्मणानाञ्च मिथः साकाङ्क्षत्वात् ***नष्टाश्वदग्धरथन्यायेन*** सम्बन्ध इति उभयोरपि गुरुमुखोच्चारणानुच्चारणरूपाध्ययनकर्म सिद्ध्यति।

तत्र नामधेय-निषेधार्थवादानां ब्राह्मणभागान्तर्गतत्वं मन्त्राणाञ्च ब्राह्मणभागविहितकर्मसमेवतद्रव्य-देवतादिप्रकाशकत्वञ्चेति ब्राह्मणभागस्यैव प्रथमतः उपादेयत्वं सिद्ध्यति। तत्रापि ***''सर्वारम्भाः तण्डुलप्रस्थमूलाः''*** इति न्यायेन विधेरत्यन्तमुपादेयत्वमिति तस्य स्वरूपं लक्षणं विभागञ्च सम्प्रदर्शयामः।

**विधेः स्वरूपम् -**

तत्र भगवान् पाणिनिः ***''विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्''***[2], ***लोट् च***[3],

---

* शोधच्छात्रः, सां.यो.न्या.वै.मी.जै.सर्वदर्शनविभागः, श्रीला.ब.शा.रा.सं.विद्यापीठम्, नवदेहली-110016

1. आपस्तम्बश्रौतसूत्रम्
2. अष्टाध्यायी - 3।3।161
3. अष्टाध्यायी - 3।3।162

***लिङर्थे लेट्[1], प्रैषातिसर्गप्राप्तकालेषु कृत्यश्च[2], तव्यत्तव्यानीयरः[3]''*** इत्यादिसूत्रैर्लिङर्थं बोधयति। एतत्सूत्राणां पर्यालोचनेन विधिर्लिङर्थः इति प्रतीतेः लिङर्थोऽपि कश्चित् विधिशब्देन व्यवह्रियते। तथा च ***लिङर्थो लिङ् तद्घटितं वाक्यं चेति त्रयाणां विधिशब्देन व्यवहारो भवति। विधिः निकृष्टस्य प्रेरणम्,*** निमन्त्रणम् अनिष्टजनकीभूताकरणप्रतियोगित्वानुमापकप्रवर्त्तकेच्छा, आमन्त्रणं कामचारानुज्ञा, अधीष्टं सत्कारपूर्वकम् उक्तं प्रति प्रेरणमिति सूत्राभिहितविध्यादिपदानां सत्स्वप्यर्थेषु विधायकत्वं प्रत्ययानां समानम्। किन्तु विध्यादिस्वरूपं विविच्य एव बोधयितुं मीमांसाश्रयं यथा प्रवृत्तं न तथाऽज्ञातशास्त्रं व्यापृतं भवति। यद्यपि मीमांसाशास्त्रं व्याप्यशास्त्रमिति व्यपदिश्यते, व्याप्यञ्च पदसमूहात्मकम्, पदसमूहात्मकस्य तस्य विवेचनमेवाऽस्य शास्त्रस्य कार्यम्, तथापि पदार्थावगमेन विना वाक्यार्थपरिज्ञानं दुर्गममिति पदार्था अपि अनेन शास्त्रेण तत्र तत्र विविच्यन्ते। पदगतसाधुत्वासाधुत्वे व्याकरणे निर्मिते तदर्थान् यथावत् निर्णीय वाक्यार्थं प्रतिपादयितुं शास्त्रमिदं प्रवृत्तम्। अत एव ***तद्भूताधिकरणे[4]*** वाक्यानां तदर्थेषु पृथक्-शक्तिः किमस्ति अथवा तत्पदैरवबोधितैरर्थैरेव वाक्यार्थसिद्धिरिति सन्दिह्य पदानामेव वाक्यार्थत्वं न वाक्यार्थे पृथक्-शक्तिरिति सिद्धान्तितम्। तेनेदं निगद्यते ***यद्वाच्यवाचकभावः[5] न व्याकरणाधीनः*** इति। तत्र चाऽन्वयव्यतिरेकाभ्यां लौकिकव्यवहारसमधिगम्यत्वमेव पदार्थस्येति सिद्धे सति मीमांसकानां पदार्थान्वितं वाक्यार्थं निरूपयति, अतोऽस्य वाक्यशास्त्रमिति प्रथा।

वेदे ***'अग्निहोत्रं जुहुयात्', 'हिरण्यमात्रेयाय दद्यात्'*** इत्यादयो लिङन्ताः प्रयोगाः ***जुहुधि, यज*** इत्यादयो लोडन्ताः, ***'आग्नेयो भवति', 'अनवानं यजति', 'दक्षिणां ददाति', 'तण्डुलैर्जुहोति'*** इत्यादयो लेडन्ताः, ***'स्वाध्यायोऽध्येतव्यः'*** इत्यादयस्तव्यन्ताः प्रयोगाश्च दृश्यन्ते। एवं ***'न हिंस्यात्', 'नातिरात्रे षोडशिनं गृह्णाति', 'नेक्षेतोद्यमादित्यं न प्रवस्तव्यम्'*** इत्यादयो नञ्सहिताः लिङादयः श्रूयन्ते।

लोके च ***'इदं कुरु', 'इदं मा कुरु', 'द्विषदन्नं न भोक्तव्यम्'*** इत्यादयो दरीदृश्यन्ते। तत्र सर्वत्र विधिप्रत्ययाः श्रूयन्ते। तत्र लिङर्थस्य विधेः स्वरूपं विचारणीयम्। महाभाष्ये च भगवान् पतञ्जलिः ***विधिर्नाम प्रेषणम्[6]*** प्रेरणमिति पाठान्तरम्। तस्याप्ययमेवार्थः। ***यं धर्मं ज्ञात्वा लोकः प्रवर्तते स धर्मो विधिरिति यावत्। लोके च सर्वोऽपि क्रियायामिष्टसाधनत्वं ज्ञात्वैव प्रवर्तत इति इष्टसाधनत्वमेव प्रेषणं विधिश्च। प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते*** इति महाभाष्य-न्यायभाष्य-वार्त्तिकादिषु स्पष्टं निरूपितमस्ति।

---

1. अष्टाध्यायी - 3।4।7
2. अष्टाध्यायी - 3।3।163
3. अष्टाध्यायी - 3।1।96
4. शास्त्रदीपिका - 1।1।7
5. मीमांसान्यायप्रकाशः, पृ.सं. 36 (चिन्नास्वामिशास्त्रीसम्पादितः)
6. महाभाष्यम्

अतो लोके लिङ्लोट्तव्यप्रत्ययघटितेषु वाक्येषु श्रूयमाणेषु गृहीतपदपदार्थसंगतिकाः पुरुषाः प्रयोजकं पुरुषं माम् अयं प्रवर्त्तयति, मत्प्रवृत्त्यनुकूलव्यापारवान् अयम् इति अनुव्यवस्यति, एवं विधिप्रत्ययाघटितेषु वाक्येषु श्रूयमाणेषु एवं न अनुसन्दधति, अतोऽन्वयव्यतिरेकाभ्यां प्रवर्त्तकत्वं विधिप्रत्ययानाम्, तथा नञ्समभिव्याहृतानाञ्च तेषां निवर्त्तकत्वं च लौकिकाः पुरुषाः बुध्यन्ते, अनेन ***'प्रवर्त्तना प्रवृत्त्यनुकूलव्यापारो विधेरर्थः'*** इति सिध्यति। तेन प्रवर्त्तकत्वं विधेः स्वरूपं सिद्धं भवति। परन्तु तत्र विधेः स्वरूपविषये दार्शनिकानामस्ति महती विप्रतिपत्तिः। तां विप्रतिपत्तिं स्वीकृत्य किञ्चिदत्र उपस्थाप्यते।

**विधेर्लक्षणम् -**

तत्र *प्रवृत्त्यनुकूलव्यापारवत्त्वम् एव विधित्वमिति* चेत् तदिदं लक्षणं लिङ्लोट्तव्यप्रत्ययेषु समानम्। पूर्वम् अवोचं यत् विधिनिमन्त्रणादिपदानां पाणिनिसूत्रनिर्दिष्टानां सत्यप्यर्थभेदे प्रवर्तनात्वं तु सर्वत्र साम्यमिति। पाणिनिप्रयुक्तेषु आदितश्चतुर्षु प्रवर्तनात्वस्याऽनुगतत्वेऽपि चतुर्ण्णां पदानां तत्र शक्तौ स्वीकृतायामपि सम्प्रश्नप्रार्थनयोः तु अतिरिक्ता एव शक्तिः स्वीकार्या, तत्र प्रवर्तनात्वासम्भवात्। किन्तु तयोः प्रवर्तनात्वे निरूढलक्षणा, ***''हेतु-हेतुमतोर्लिङ्''***[1]***, कामप्रवेदनेऽकच्चिति''***[2] इति अनुशासनबलेन हेत्वादौ वा शक्तिमङ्गीकृत्य तत्र प्रवर्तनात्वस्य शक्यतावच्छेदकत्वेऽङ्गीकृते न कापि हानिः। ***प्रवर्तनात्वं च प्रवृत्त्यनुकूलव्यापारवत्त्वम्। अनुकूलत्वञ्च जनकत्वरूपम्। तच्च पुरुषाशयवृत्ति। वेदे च तदभावेन प्रवर्तानात्वम् अन्यस्यैव कस्यचन स्वीकार्यम्।*** *स्वं रूप्यते इति व्युत्पत्त्या स्वरूपशब्दः लक्षणपरोऽपि शास्त्रकारैः स्वीकृतः। गोः स्वरूपपरिचायिका सास्ना एव भवति। न तु श्रृङ्गादिः। तेन सास्नादिमत्त्वं गोर्लक्षणमिति अर्थात् सिद्ध्यति। तथैव प्रवर्त्तना विधेः स्वरूपमिति सिद्धे प्रवृत्त्यनुकूलव्यापारबोधकत्वं विधेर्लक्षणमापतति। एवं स्मृतौ सत्यामन्वयव्यतिरेकाभ्यां विधेः प्रवर्तना-प्रवृत्त्यनुकूलव्यापार इत्यर्थोऽवबुध्यते।*

तदयमत्र *भाट्टमतेन विध्यर्थनिष्कर्षः सर्वत्र चैतन्यस्य प्रवृत्तिः स्वेच्छया क्वचित्, क्वचिच्च परप्रवर्त्तनाजनितेच्छया इति लोकानुभवसिद्धम्।* तत्र शब्दश्रवणोत्तरं जायमाना प्रवृत्तिः द्वितीयकोटिं प्रविशति। प्रवर्तकत्वमत्र परस्य। *''देवदत्तः मां प्रवर्तयति न यज्ञदत्तः।''* इति प्रयोगबलेन प्रवर्तयितुः परस्य धर्मः प्रवर्त्तना इति निष्पद्यते। अन्यथा पूर्वोपात्तप्रयोगस्य व्यवस्थानुपपत्तिः। परस्य इदं प्रवर्तकत्वं ज्ञापनमात्रेण स्वीकर्तव्यम्। न त्वाश्रयत्वेन। आश्रयत्वेन अङ्गीक्रियमाणे *''देवदत्तः त्वां प्रवर्तयति''* इति वदतो यज्ञदत्तस्यापि प्रवर्तकत्वमापतेत्। अतोऽहमेनं प्रवर्तयामि इति प्रवर्तयितुरनुभवात् पुरुषधर्मत्वमेव प्रवर्तनायाः स्वरूपम्। तथा च पुरुषप्रवृत्तिहेतुत्वे सति प्रवर्तयितुर्धर्मत्वं प्रवर्तनात्वमिति प्रवर्त्तनायाः स्वरूपं निर्णीतम्। धर्मपदम् अत्र समवेतत्वपरं विवक्षितम्। स च धर्मः पुरुषान्वयविशेषः। वेदे च पुरुषाभावात् लिङादिशब्दनिष्ठ एव मीमांसकैः कैश्चन कल्प्यते। अत्र हेतुत्वं च प्रयोजकत्वरूपम्,

1. अष्टाध्यायी - 3।3।156
2. अष्टाध्यायी - 3।3।153

तस्य प्रवृत्तिकारणभूतं यदिष्टसाधनताज्ञानं तज्जनकज्ञानविषयत्वात्। अतश्च प्रैषादीनां प्रवृत्तिहेतुत्वं निराबाधम्। लिङादीनां विधिप्रत्ययानां वृद्धव्यवहारेणाऽन्वयव्यतिरेकाभ्यां प्रवर्तनायां शक्तिः। विधिनिमन्त्रणेत्यादिपाणिनेरनुशासनबलेनापि शक्तिः प्रवर्तनायां निर्धार्यते। यद्यपि नानार्थपदानि सूत्रे प्रयुक्तानि, तथापि प्रवर्तनात्वस्य एकस्य शक्यतावच्छेदकत्वस्वीकारेण न दोषः। अथवा अनुकूलव्यापारवत्त्वस्यैव शक्यतावच्छेदकवत्त्वं स्वीकर्तुं शक्यम्। तस्यायमनुकूलव्यापारः इति निरूपकापेक्षायाम् आख्यातार्थः प्रवृत्तिनिरूपितोऽयं व्यापार इति शक्यते स्वीकर्तुम्। यथा- प्रवृत्तिः सर्गादिफलनिरूपिता भवति, तथा अनुकूलव्यापारस्य प्रवृत्तिनिरूपितत्वमिति यावत्। तादृशव्यापारः प्रवर्तकनिष्ठः। प्रवर्तकश्च यथा पुरुषो भवति तथा लिङादिविधयोऽपि भवन्ति। *खण्डदेवाचार्यस्तु प्रवर्त्तनात्वम् अखण्डोपाधिरिति वदन्ति।*[1]

**नैयायिकसम्मतं विधेः स्वरूपम्** -

*प्रमाणादिषोडशपदार्थानां तत्त्वज्ञानान्निःश्रेयसावाप्तिरिति*[2] *न्यायदर्शनाध्ययनस्य फलम्।* तत्र प्रमाणमन्तरेण न कस्यापि वस्तुनः सिद्धिर्भवतीति महर्षिगौतमेन प्रमाणपदार्थविवेचनं प्रामुख्येण प्रतिपादितम्। न्यायदर्शने चत्वारि प्रमाणानि[3] प्रतिपादितानि सन्ति। तेषु **'आप्तोपदेशः शब्दः'**[4] इति शब्दप्रमाणलक्षणम्। तत्र क्रमप्राप्तस्य शब्दप्रमाणपरीक्षणावसरे **'विधिर्विधायकः'**[5] इति सूत्रमुखेन विधिविषयिणी चर्चा विहिता।

न्यायदर्शने शब्दस्य प्रमाणान्तरत्वं व्यवस्थाप्य कीदृशशब्दस्य शाब्दबोधे कारणत्वमिति जिज्ञासायां सार्थकशब्दस्यैव शाब्दबोधप्रयोजकत्वमिति सिद्धान्तः। तत्र कोऽसौ सार्थकशब्दः शाब्दबोधे प्रयोजकः इत्यत्र जगदीशो वदति-

**शब्दान्तरमपेक्ष्यैव सार्थकः स्वार्थबोधकृत्।**
**प्रकृतिः प्रत्ययश्चैव निपातश्चेति तत्त्रिधा।।**[6]

***यादृशः शब्दः शब्दान्तरं सहकृत्यैव स्वस्य स्वघटकस्य च वृत्त्युपस्थाप्ययादृशार्थावगाहिबोधं प्रत्यनुकूलः, स तथाविधार्थे सार्थकः।*** अत्रेदमपि अवधेयं ***न्यायमते शब्दपदयोः पर्यायत्वात् अनयोः कोऽपि भेदो नास्ति।*** अतो नैयायिकानां मते शक्तमेव पदं भवति। अर्थात् **अस्मात् पदादयमर्थो बोद्धव्यः इतीश्वरेच्छाशक्तिविशिष्टं पदं भवति न तु सुप्तिङन्तं पदम्।** यतो हि

1. मीमांसाकौस्तुभः, पृ.सं. 29, चौखम्बासंस्करणम्।
2. न्यायसूत्रम् - 1।1।1 *(प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्ताऽवयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां* तत्त्वज्ञानान्निःश्रेयसाधिगमः)
3. न्यायसूत्रम् - 1।1।3
4. न्यायसूत्रम् - 1।1।7
5. न्यायसूत्रम् - 2।1।63
6. शब्दशक्तिप्रकाशिका, कारिकासङ्ख्या 6

***वैयाकरणानां मते शब्दपदयोरस्ति कश्चिद् भेदः।*** स च ***शब्दः प्रकृति-प्रत्यय-निपातभेदेन त्रिविधो भवति। प्रकृतिस्तु नाम-धातुभेदेन द्विविधो भवति।***[1] ***प्रत्ययस्तु***[2] ***सुप्तिङ्कृत्तद्धितभेदेन चतुर्विधः।*** चतुर्विधोऽपि ***प्रत्ययः प्रकृत्यन्वितस्वार्थबोधकृत् भवति।*** एवञ्च ***श्रोत्रेन्द्रियग्राह्यो यः शब्दः वर्णात्मक-ध्वन्यात्मकभेदेन द्विविधः। वर्णात्मकः शब्दः प्रमाणभूतः। स च लौकिकालौकिकभेदेन द्विविधः।***

तत्र ***'भूवादयो धातवः***[3] इत्यत्र धातुभूतो यः शब्दस्तेषां शब्दानां साधुत्वप्रतिपादनाय प्रत्ययानामपेक्षा भवति। तत्रापि कालादीनामुपयोगो भवति। तदर्थं पाणिनिना निर्दिष्टाः अष्टादशप्रत्ययाः। तेऽपि प्रत्ययाः परस्मैपदात्मनेपदभेदेन द्विविधाः। लः इत्यनेन लकारो गृह्यते। स च कर्तरि कर्मणि भावे च प्रवर्तते। तदर्थमपि पाणिनिना सूत्रं निर्दिष्टम्-

**लः कर्मणि च भावे चाकर्मकेभ्यः**[4]

तत्र ***दशलकाराः सन्ति- लट्, लिट्, लुट्, लृट्, लेट्, लोट्, लङ्, लिङ्, लुङ्, लृङ्।*** एषु पञ्चमो लकारश्छन्दमात्रगोचरः।[5] तत्र ***यो हि लिङ्लकारः तद्घटितं यदलौकिकवाक्यं तद्ब्राह्मणवाक्यं भवति। तदपि विधि-निषेधार्थवादभेदेन वाक्यं त्रिविधम्।***[6]

परं न्यायसूत्रकारः निषेधमपहाय अनुवादं चादाय ब्राह्मणवाक्यानां त्रैविध्यं प्रतिपादितम्। तथा च सूत्रम्-

**'विध्यर्थवादानुवादवचनविनियोगात्'**[7]

एषु वाक्येषु विधेरर्थविवक्षायां न्यायसूत्रकारो महर्षिगौतमः प्रतिपादयति-

**विधिर्विधायकः**[8]

***विधायकं वाक्यं विधिर्भवति। ''स्वर्गकामो यजेत''*** इति वाक्यं यागविधायकत्वाद् विधिवाक्यमिति सूत्रार्थः। अर्थात् ***प्रवर्तकत्वं प्रवृत्तिजनकत्वमेव विध्यर्थः।*** तद्विषये नैयायिकानां

---

1. *निरुक्ता प्रकृतिर्द्वेधा नाम-धातुप्रभेदतः।*
   *यत्प्रातिपदिकं प्रोक्तं तन्नाम्नो नातिरिच्यते।।* शब्दशक्तिप्रकाशिका, कारिकासङ्ख्या 14
2. *यादृशार्थे प्रकृत्यन्यो निपातान्यश्च वृत्तिमान्।*
   *स तादृशार्थे शब्दः स्यात् प्रत्ययोऽसौ चतुर्विधः।।* शब्दशक्तिप्रकाशिका, कारिकासङ्ख्या 9
3. अष्टाध्यायी - 1।1।3
4. अष्टाध्यायी - 3।4।69
5. भ्वादिप्रकरणम्, वैयाकरणसिद्धान्तकौमुदी
6. विधिस्वरूपविचारः, पृ.सं. 1
7. न्यायसूत्रम् - 2।1।62
8. न्यायसूत्रम् - 2।1।63

बहुमतभेदो दरीदृश्यते। विश्वनाथवृत्तौ तावत् ***इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यं विधिः 'अग्निहोत्रं जुहुयात्स्वर्गकामः' इत्यादि।***[1] न्यायवार्त्तिके पुनः ***'देशकं विधिः'***[2] इति। एवं च ***प्रवर्तकं वाक्यं विधिरिति फलति।*** वाक्यस्य प्रवर्तकत्वं च प्रवृत्त्यनुकूलज्ञानोत्पादनद्वारा न स्वतः। शब्दस्य ज्ञापकत्वेन कारकत्वाभावात्। ततश्च ***यजेत इति शब्दश्रवणानन्तरं यमर्थं ज्ञात्वा प्रवर्तते तदर्थज्ञापकं वाक्यं विधिरिति सिध्यति।*** यद्यपि लिङादिप्रत्यय एव प्रवृत्तिहेतुं ज्ञानं जनयतीति स एव विधिशब्दवाच्य इति प्रतीयते, तथापि तादृशलिङादिप्रत्ययघटित्वात् वाक्यमपि विधिशब्देन व्यपदिश्यत इति न्यायभाष्यवार्त्तिकयोराशयः।

**सिद्धान्तपक्षः**

लिङादिश्रवणोत्तरं लोकानां प्रवृत्तिः प्रत्यक्षसिद्धा। तत्र लिङ्ज्ञानं प्रवृत्तिसामग्रीजननद्वारा प्रवृत्तावुपयुज्यते। प्रवृत्तिश्च सामग्रीकृतिसाध्यत्वप्रकारिकेच्छा। इयमेव चिकीर्षाशब्देन व्यवह्रियते। अस्याश्च चिकीर्षायाः प्रवृत्तिं प्रति स्वरूपतया कारणत्वम्। अतो लिङादिज्ञानस्य तत्र उपयोगाभावेऽपि चिकीर्षाकारणीभूते ज्ञाने उपयोगो वक्तव्यः। तद् ज्ञानं च बलवदनिष्टाननुबन्धित्वकृतिसाध्यत्वे साधनत्वरूपम्। अर्थात् प्रवर्त्तमानः पुरुषो यदा किञ्चित् कर्तुमभिलषति तदा तस्य केवलं लिङ्ज्ञानमनुपयुक्तम्। किन्तु इच्छायां करणीभूतं यद् बलवदनिष्टाननुबन्धित्वादिज्ञानं तत्र लिङ्ज्ञानमुपकरोति। ***लिङादिकं श्रुत्वा स इदं मदिष्टसाधनम्, इदं मत्कृतिसाध्यम्, इदं बलवदनिष्टाननुबन्धि इत्यनुसन्धत्ते। एतेषु त्रिषु ज्ञानेषु अन्यतमं यदि नं स्यात् तर्हि प्रवृत्तिर्नोदेति।***

विषसंसृष्टान्नभोजने कृतिसाध्यत्वस्य क्षुन्निवृत्तिरूपेष्टसाधनत्वस्य च सत्त्वेऽपि बलवदनिष्टेन मरणेन अनुबन्धित्वात् प्रवृत्तिर्न जायते। एवं चन्द्रानयने बलवदनिष्टाननुबन्धित्व-इष्टसाधनत्वयोः सतोरपि कृतिसाध्यत्वाभावात् न प्रवृत्तिरित्युपजीव्यते। एवं जलताडन-मण्डलीकरणादौ बलवदनिष्टाननुबन्धित्व-कृतिसाध्यत्वयोर्वर्तमानत्वेऽपि इष्टसाधनत्वाऽभावात् न प्रवृत्तिरिति त्रितयं प्रवृत्तिं प्रति कारणम् एष्टव्यम्।

अस्मिन्नेव अर्थत्रये लिङः शक्तिरङ्गीकार्या। सा च शक्तिः एकैकस्मिन् अर्थे न पृथक्, किन्तु पुष्पवन्तशब्दस्येव समुदितेऽर्थत्रये, यथा पुष्पवन्तशब्दस्य सूर्याचन्द्रमसोः उभयत्रापि शक्तिः, तथैव लिङः शक्तिः। अत एव एतत्त्रितयं लिङर्थत्वेन नैयायिकैरभ्युपगम्यते।

***विध्यन्वयबोधं प्रति समर्था लटो लोटश्च भिन्ना तिङ् लिङ् इति उच्यते। लट्लोड्-भिन्नत्वे सति यादृशानुपूर्वीप्रकारकज्ञानत्वं विध्यन्वयबोधजनकतावच्छेदकं तादृशानुपूर्वीमत्तिङ्त्वं लिङ्त्वमिति पर्यवसितम्।***

विधिपदार्थस्य तु नेह कृत्यात्मकं विधानम्। आख्यातसामान्यस्य कृतिबोधकतया लट्लोड्-भिन्नाख्यातसामान्ये अतिव्याप्तेः। किं तु ***प्रवृत्तिजनकचिकीर्षाजनकतावच्छेदकप्रकारताश्रयः***

1. श्रीगौतमप्रणीतन्यायसूत्राणि, विश्वनाथवृत्तिः, पृ.सं. 142
2. न्यायवार्त्तिकम्, न्यायसूत्रम् - 2।1।63

***विधिः। स च इष्टसाधनत्वं, कृतिसाध्यत्वं, बलवदनिष्टाजनकत्वं च प्रत्येकमेव। ततो यागे प्रवर्तत इति*** क्रमः। *ततश्च* ***प्रवृत्तिजनिकायां चिकीर्षायां जनके ज्ञाने प्रकारत्वं त्रिष्वपि वर्तत इति इष्टसाधनत्वादिकं विधिर्लिङोऽर्थ इत्युक्तं भवति।*** एवं च यजेत, पचेत इत्यादौ यागः पाकश्च कृतिसाध्यः इष्टसाधनं बलवदनिष्टाजनकश्चेत्याकारको बोधो भवति। पटमानय इत्यादौ लोटि सप्तमं पदं गृह्णाति इत्यादौ लटि च विधिबोधके अतिव्याप्तिवारणाय लट्लोट्-भिन्नत्वनिवेशः। यष्टव्यं देयमित्यादावतिव्याप्तिवारणाय तिङ्त्वनिवेशः। पच्यादित्यादौ आशीर्लिङि अतिव्याप्तिवारणाय भावित्वाद्यप्रत्यायकत्वे सतीति विशेषणं देयम्।

यद्यपि इदानीन्तनस्वकीयकृतिसाध्यताज्ञानमेव चिकीर्षाद्वारा प्रवर्तकमिति वक्तव्यम्। अन्यथा स्वस्यैव कालान्तरीयकृतिसाध्यताज्ञानात् परस्य चेदानीन्तनकृतिसाध्यताज्ञानादपि प्रवृत्त्यापत्तेः। तथा च इदानीन्तनस्वकृत्यन्तर्भावेणापि लिङः शक्त्यापत्तिः। अतः प्रवर्तकज्ञानप्रकारत्वं कृतिसाध्यत्वे अप्रयोजकम्। अतः कृतिसाध्यत्वं विहाय इष्टसाधनत्वबलवदनिष्टा- जनकत्वयोरेव विधित्वम्। तथापि ***'पङ्गुः समुद्रं न तरेत्'*** इत्यादौ नञा समुद्रतरणे पङ्गुवृत्तिकृतिसाध्यत्वाभावबोधनिर्वाहाय कृतिसाध्यत्वस्य लिङर्थत्वमावश्यकम्। समुद्रतरणे इष्टसाधनत्वबलदनिष्टाजनकत्वयोः सत्त्वेन तयोरभावस्य नञा बोधयितुमशक्यत्वात्। तथा ***'तृप्तिकामो जलं न ताडयेत्'*** इत्यत्र जलताडने कृतिसाध्यत्वाभावस्य बलवदनिष्टाजनकत्वाभावस्य च बाधात् इष्टसाधनत्वाभाव एव बोधनीय इति तत्र इष्टसाधनत्वं लिङर्थ इति स्वीकरणीयम्। एवं ***'न कलञ्जं भक्षयेत्'*** इत्यादौ कलञ्जभक्षणे इष्टसाधनत्वाभावस्य कृतिसाध्यत्वाभावस्य च बाधितत्वात् बलवदनिष्टाजनकत्वाभाव एव बोधनीय इति तत्र बलवदनिष्टाजनकत्वं लिङर्थ इति स्वीकरणीयम्। ***यजेत स्वर्गकाम*** इत्यादौ तु त्रितयं लिङर्थः। अबाधात्।

तथा चाहोरात्रावच्छेद्यभोजननिवृत्तिरूपस्योपवासस्य नित्यस्य कृतिसाध्यत्वाभावात् ***'अष्टम्यामुपवसेत्'*** इति विधेर्बाध इत्यपि न वक्तव्यम्। कृत्यधीनसमयसंबन्धरूपस्य क्षैमिककृतिसाध्यत्वस्य नित्येऽप्यनपायात्। यद्वा तादृशप्रयोगे भोजनादिप्रतिकूलव्यापारस्यैव धात्वर्थत्वात् तस्य च कृतिसाध्यत्वानपायात्।

एवं ***पाकं कुर्यात्*** इत्यत्र धात्वर्थकृतौ कृतिसाध्यत्वस्य बाधात्, ***जलं ताडयेत्*** इत्यत्र जलताडने इष्टसाधनत्वस्य बाधात्, ***श्येनेन यजेत*** इत्यत्र श्येनयागे बलवदनिष्टाजनकत्वस्य बाधाच्च तत्र तत्र बाधितमर्थं विहाय यथायथम् इष्टसाधनत्वादेर्बोधः। तथा प्रामाण्यव्यवहारः कृतिसाध्यत्वभ्रमहेतुत्वप्रयुक्तः।

***इत्थम् इतरस्य प्रवृत्तिमुत्पादयितुं लिङ्लोट्तव्यप्रत्ययघटितानाम् 'अयं पचेत्', पचतु' इत्यादीनां वाक्यानां प्रयोगो लोके दृश्यते। अत एवं जातीयकानां वाक्यानां विधायकत्वात् प्रवर्तकत्वाद् विधिरिति शब्देन व्यपदेशो भवति। यमर्थं ज्ञात्वा लोकः प्रवर्तते स विधिरिति यावत्। लोके च सर्वोऽपि क्रियायामिष्टसाधनत्वं ज्ञात्वैव प्रवर्तत इति इष्टसाधनत्वमेव प्रवर्तना विधिश्च। 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते'*** इति च प्रसिद्धम्।

प्रयोजनलक्षणं व्याचक्षाणो न्यायवार्त्तिककारश्च- ***'इदं सुखसाधनमिति बुद्ध्वा सुखावाप्तये यतते। इदं दुःखसाधनमिति चावगम्य दुःखहानाय।'*** **इति स्पष्टम् इष्टसाधनताज्ञानं प्रवृत्तिहेतुरित्यभ्यधात्।** ***ततश्च गामानयेदिति वाक्यश्रवणानन्तरं गवानयने प्रवर्तमानं प्रयोज्यवृद्धं दृष्ट्वा मध्यस्थो व्युत्पित्सुरेवमनुमिनोति 'अस्य प्रवृत्तिरिष्टसाधनताज्ञानपूर्विका, प्रवृत्तित्वात्, मदीयप्रवृत्तिवद्' इति।***

तां चेष्टसाधनतां यतो लिङादिश्रवणानन्तरं प्रयोज्यवृद्धोऽवगच्छति, ततः इष्टसाधनताबोधको लिङादिरिति इष्टसाधनता लिङाद्यर्थ इति सिध्यति। तदुक्तं न्यायवार्त्तिकतात्पर्यटीकायां वाचस्पतिमिश्रैः- ***'तस्मादपेक्षितोपायता प्रवर्तना स्वात्मनि सिद्धा वृद्धस्यापि प्रवृत्तिहेतुरित्यवगच्छति व्युत्पित्सुर्बालः। सा च लिङादिश्रवणसमनन्तरमुपजायमाना लिङाद्यर्थ इति निश्चिनोति'***[1] इति। महाभाष्यकारोऽपि ***'हेतुमति च'***[2] इति सूत्रे भाष्ये इष्टसाधनताज्ञानं प्रवृत्तिहेतुरिति स्पष्टमभिहितवान्। तत्र हीत्थं भाष्यम्- ***'नेह कश्चित्परोऽनुग्रहीतव्य इति प्रवर्तते। सर्वे इमे स्वभूत्यर्थं प्रवर्तनते। ये तावदेते गुरुशुश्रूषवो नाम तेऽपि स्वभूत्यर्थं प्रवर्तन्ते। पारलौकिकं च ना भविष्यति। इह च नः प्रीतो गुरुरध्यापयिष्यतीति। तथा च एते दासाः कर्मकरा नाम तेऽपि स्वभूत्यर्थं प्रवर्तन्ते भक्तं चैलं च लप्स्यामहे परिभाषाश्च न नो भविष्यन्तीति। तथा य एते शिल्पिनो नाम एतेऽपि स्वभूत्यर्थं प्रवर्तन्ते वेतनं च लप्स्यामहे मित्राणि च नो भविष्यन्तीति***[3] इति। **'सर्वत्र स्वेष्टसाधनताज्ञानमेव प्रवर्तकमिति भावः'** इति तत्रत्यः उद्योतग्रन्थः। निदर्शितं भाष्यं संगृहणानो हरिरप्याह-

**निमित्तेभ्यः प्रवर्तन्ते सर्व एव स्वभूतये।**
***अभिप्रायानुरोधोऽपि स्वार्थस्यैव प्रसिद्धये।।***[4]

इति। अस्य हि भाष्यसन्दर्भस्य सूक्ष्ममीक्षणेन सर्वस्यापि स्वेष्टसाधनताज्ञानपूर्विकैव तत्तत्क्रियायां प्रवृत्तिरिति भाष्यकृदाशयः स्पष्टीभवति। ततश्च ***'विधिः प्रेरणा'*** इति *'विधिनिमन्त्रण'* सूत्रे वदतो भाष्यकारस्य प्रवृत्तिजनकज्ञानविषयभूतमिष्टसाधनत्वमेव प्रवर्तनेत्यभिप्रायोऽवगम्यते। सर्वमेतन्मनसि कुर्वद्भिर्मण्डनमिश्रैः-

**पुंसां नेष्टाभ्युपायात् क्रियास्वन्यः प्रवर्तकः।**
***प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम्।।***[5]

इति प्रोक्तम्। अद्वैतविद्याचार्याः संक्षेपशारीरककाराश्च-

---

1. न्यायवार्त्तिकतात्पर्यटीका, पृ.सं. 426
2.. अष्टाध्यायी - 3।1।26
3. 'हेतुमति च' अष्टाध्यायी - 3।1।26 इतिसूत्रस्थं व्याकरणमहाभाष्यम्।
4. वाक्यपदीयम्, तृतीयकाण्डः, पृ. 324
5. विधिविवेकः-सं.शा. पृ. 303

**श्रेयो हेतुत्ववाची यदि भवति तदा संभवत्येकरूपा**
**शक्तिस्तस्याभिधाने, न तु भवति तदा कारकोऽयं प्रवृत्तेः।**
**श्रेयो हेतुश्च वाच्यः श्रुतिवचसि तदा पौरुषेयश्च तुल्यः**
***क्लृप्तश्चासौ न कल्प्यः श्रुतिवचसि यथा भावना लिङ् निबद्धा।।***[1]

इति श्लोकेनेममर्थं स्पष्टं न्यवेदयन्। विशिष्टवेदान्ताचार्याः श्रीरामानुजाचार्याश्च- ***'स्वर्गकामो यजेतेत्येवमादौ हि कामिनः कर्तव्यतया यागाद्युपदेशाद् यागादेः स्वर्गादिसाधनत्वमवगम्य फलरागत एव यागादौ प्रवर्तते। लौकिक्यामपि हिंसायां केनचित्प्रमाणेन हिंसायाः स्वसमीहितसाधनत्वमवगम्य रागात्प्रवर्तत इति न कश्चन विशेषः'***[2] इत्यभिदधानाः इष्टसाधनताज्ञानं प्रवृत्तिहेतुरिति स्वाशयमाविश्चक्रुः। श्रीमन्मध्वाचार्या अप्येवमेवाशरेरत इति विष्णुतत्त्वनिर्णयस्थात्- ***'इष्टसाधनतां ज्ञात्वैव हि प्रवर्तते'***[3] इति तदीयाद्वाक्यादवगम्यते। वैयाकरणभूषणसारेऽपि ***'प्रवर्तनात्वञ्च प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम् तच्चेष्टसाधनत्वस्यास्तीति तदेव विध्यर्थः'***[4] इति ग्रन्थेन इष्टसाधनत्वं विध्यर्थ इति प्रत्यपादि।

इत्थं प्राचीनानां ग्रन्थानामवलोकनेन इष्टसाधनताज्ञानं प्रवृत्तिहेतुरित्यत्र विषये न कस्यापि विप्रतिपत्तिरिति प्रतीयते। तादृशज्ञानजनकत्वाच्च लिङादेरिष्टसाधनत्वं लिङादिप्रत्ययार्थ इत्यपि प्रायः सर्वेषां सम्मतमेव। एवं रीत्या इष्टसाधनताज्ञानमात्रस्य प्रवृत्तिहेतुत्वे इष्टसाधनतामात्रस्य लिङाद्यर्थत्वे च काश्चन अनुपपत्तीः पश्यन् ***मणिकारो गङ्गेशोपाध्यायः इष्टसाधनत्वं बलवदनिष्टाननुबन्धित्वं कृतिसाध्यत्वं चेति त्रितयं लिङर्थः, त्रितयज्ञानं च प्रवृत्तिहेतुः इति न्यरूपयत्।*** तथा हि चन्द्रानयनादौ इष्टसाधनताज्ञानसद्भावेऽपि पुरुषो न प्रवर्तते। अतः कृतिसाध्यताज्ञानमपि प्रवर्तकमित्यङ्गीकरणीयम्। चन्द्रानयनं कृतिसाध्यमिति ज्ञानविरहात् तत्र न प्रवर्तते। एवं मधुविषसंमिश्रान्नभोजने तृप्तिरूपेष्टसाधनत्वे जनकत्वज्ञानमपि प्रवृत्तिहेतुरिति स्वीकर्तव्यम्। मधुविषसंमिश्रान्नभोजनं तत्काले इष्टं जनयदपि मरणोदर्कं भवतीति अनिष्टजनकत्वज्ञानमेव तत्रस्तीति न प्रवर्तते। मण्डलीकरणादौ बलवदनिष्टाजनकत्वकृतिसाध्यत्वयोर्ज्ञानेऽपि पुरुषो न प्रवर्तते। अतः इष्टसाधनताज्ञानमपि प्रवृत्तिहेतुरित्यभ्युपेयम्।

इत्थं च उक्तत्रितयज्ञानविरहे प्रवृत्त्यनुदयात् त्रितयज्ञानमपि प्रवृत्तिहेतुरिति सिद्धे ***गामानयेत्यादिवाक्यश्रवणसमनन्तरजायमानां प्रयोज्यवृद्धस्य प्रवृत्तिं दृष्ट्वा तदीया प्रवृत्तिरिष्टसाधनत्वकृतिसाध्यत्वबलवदनिष्टाजनकत्वज्ञानपूर्विका, प्रवृत्तित्वात्, मत्प्रवृत्तिवद् इति व्युत्पित्सुर्बालः अनुमिनुते।*** तादृशत्रितयज्ञानस्य च लिङादिश्रवणसमनन्तरजातत्वाद् इष्टसाधनत्वादित्रितयमपि लिङाद्यर्थ इति निश्चिनोति। तथा चायमत्र जनकत्वज्ञानं कृतिसाध्यत्वज्ञानं च। तत इदं कुर्यामिति चिकीर्षा। ततः प्रवर्तते इति। एवं तावत् नैयायिकमतस्थितिरित्यलमतिविस्तरेण।

1. श्रीभाष्यम्, पृ.सं. 413
2. श्रीभाष्यम्, पृ.सं.216
3. विष्णुतत्त्वनिर्णयः
4. वैयाकरणभूषणसारः, पृ.सं. 131

ISSN - 0974-8946
अप्रैल-जून 2018
शोधप्रभा
वर्षः 43, द्वितीयाङ्कः

# संस्कृतवाङ्मये वृक्षायुर्वेदस्य चिन्तनम्

श्रीखेमराजरेग्मी*

'सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः'

इति भावनामाश्रित्य यथा मानवानां स्वास्थ्यलाभायायुर्वेदस्याविर्भावोऽभूत्, तथैव वनस्पतितीनां जगत्कल्याणाय वृक्षायुर्वेदो दृष्टिपथे आगच्छति। चिरन्तनकालादेव प्रकृतिमानवयोः तारतम्यमन्योन्यसंरक्षणार्थं सञ्जातम्। प्रकृत्या मानवानां हिताय भैषज्यगुणसमन्विता असंख्यौषधयःप्रदत्ताः। मानवैरपि स्नेहेन परिश्रमेणात्मीयतया च वनस्पतीनां संरक्षणं संवर्धनञ्च कृते सति वृक्षायुर्वेदः मानवानां स्वास्थ्यसंरक्षणाय रोगनिवारणायायुर्वर्धनाय च प्रभृतः। अस्यामेव परम्परायां हस्त्यायुर्वेदः अजायुर्वेदः गवायुर्वेदः एवं वनस्पतिरक्षणार्थं वृक्षायुर्वेदः नाम्ना परम्पराऽपि विकसितोऽभवत्। यद्यपि वृक्षाणां गुणधर्मादीनां विवेचनं ऋग्वेदात् सविस्तर पौराणिकसाहित्यं दृश्यते।

संस्कृतवाङ्मयस्य प्राचीनग्रथानामवलोकनेनेत्थं ज्ञायते यत् पुरातनकाले महर्षिपराशरस्य विरचितः एकः विशिष्टः वृक्षायुर्वेदग्रन्थासीत्। कौटिल्यार्थशास्त्रे, वराहमिहिरस्य वृहत्संहितायां अग्निपुराणे विष्णुधर्मोत्तरपुराणे वात्स्यायनस्य कामशास्त्रे शुक्रनीत्याञ्च वृक्षायुर्वेदस्योल्लेखःविस्तृतरूपेण दृश्यते।

विष्णुपुराणे यत्र उद्गिथविद्यायाः संकेतः प्राप्यते तस्य विस्तारः विष्णुधर्मोत्तरपुराणे वृक्षायुर्वेदनाम्नाभवत्। विष्णुपुराणस्य पञ्चशताब्द्यां तथा च विष्णुधर्मोत्तरपुराणस्य षष्ठशताब्द्यां रचनाकालोऽस्तीति विद्वद्भिःस्वीक्रियते।

विष्णुधर्मोत्तरपुराणस्य किञ्चित् कालात्पूर्व वृक्षायुर्वेद आचार्यवराहमिहिरेण ज्योतिषशास्त्रस्य संहितास्कन्धस्य वृहत्संहितायां विशिष्टभेदेन प्रतिपादितः।

कश्यपः वनस्पतिवेत्ता वृक्षायुर्वेदस्य विद्वानासीत्, एकपादपादपरपादपनिर्माणं नवीनसंकरजात्युत्पन्नकरणे प्रयोगात्मकं ज्ञानं कश्यपस्यैव पार्श्वे आसीदिति स्वीकुर्वन्ति पादपज्ञाः।

वृक्षः पुलिङ्ग-शब्दो वर्तते अस्य व्युत्पत्तिः **'व्रश्च-क्स'** इति रूपे भवति। नामलिङ्गानुशासनस्याथवामरकोशस्य टीकाकारैः वृक्षशब्दस्य व्युत्पत्त्यर्थमेषोक्तिरुद्धृता। **'वृक्षति वृक्ष वरणे पचाद्यच् वृश्च्यते वा ओव्रश्चू छेदने'**[1] येन सेवाकार्य स्वीकृतम्।

---

* शोधच्छात्रः, ज्योतिषविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीम्, नवदेहली-110016

1 भ्वादिगण माधवीयधातुवृत्ति पृ.स.161

**परोपकाराय फलन्ति वृक्षाः**[1]

अथवा यस्य कस्यापि वस्तुफलं पुष्टिं करोति। स एव वृक्ष शब्देन ज्ञायते। अमरकोशे वृक्षशब्दस्य त्रयोदशपयार्यवाचिनः शब्दाः विद्यन्ते।

वृक्षेभ्यः चिकित्सा तथा च वृक्षाणां चिकित्सायाः परम्परातिप्राचीना विद्यते। आयुर्वेदस्य स्वतन्त्रानुशासनानां विषयेषु वृक्षाणां वनस्पतीनाञ्च चिकित्सायाः विधानं वर्तते। वृक्षायुर्वेदस्य विषयान्तर्गते वृक्षाणां पोषणस्य रक्षणस्य च अनेके सिद्धान्ताः वर्णिताः सन्ति।

**(1) भूमिचयनम्**- प्रथमं भूमिं परीक्ष्यैव तत्र तदनुकूलाः वृक्षाः रोपणीयाः। वृहत्संहितायां प्रतिपादितं विद्यते यत् कोमला भूमिः सर्वविधवृक्षाणां रोपणे परमोपयोगिनि वर्तते। तत्र प्रथमं तिलान् वपेत्, यदा ते पुष्पिताः भवेयुः तदा मृत्तिकायां तान् सम्मेलयेत्। अनेन विधिना भूमिः उर्वरा जायते यत्र तिलाः नोत्पद्यन्ते तत्र अन्यस्य कस्यापि सस्यस्य उत्पत्तिः सम्भवा नास्ति।

**मृद्वी भूः सर्ववृक्षाणां हिता तस्यां तिलान् वपेत्।**
**पुष्पिताश्च मृद्नीयात् कर्मैः तत् प्रथमं भुवः।।**[2]

शाङ्गधरपद्धत्यामुपवनविनोदः वृक्षायुर्वेदस्य महनीयः परिच्छेदः विद्यते यतो हि अस्मिन् ग्रन्थे वृक्षायुर्वेदस्य बहवः अंशाः प्रकाशिताः। उपवनविनोदे सर्वप्रथमं वृक्षोपयुक्तभूमिःवर्णिता। जाङ्गलानूपसामान्यभेदैः वृक्षोपयुक्तभूमिः त्रिधा, वर्णतः रसतश्च षोढा वर्तते। यथा कथितम्-

**जाङ्गलानूपसामान्यभेदैः सा भिद्यते मही।**
**पुनः स भिद्यते षोढा वर्णतो रसतस्तथा।।**

**असित-विपाण्डु-श्यामल-लोहित-सित-पीतरोचिषः।**
**मधुराम्ल-लवण-तिक्त-कटुकषाया भुवो रसतः।।**[3]

एवं वृक्षायुर्वेदस्य उपवनविनोदपरिच्छेदे वृक्षोपयुक्तभूमिः, पादपजातयः, बीजवपनविधिः, रोपणविधिः, वृक्षनिषेचनविधिः, वृक्षरक्षाविधिः, उपवनक्रिया, उपवनसज्जा, कुणपजलनिर्माणविधिः, तरुचिकित्सा, चित्रिकरणविधिः अथवा वृक्षचमत्कारविधिः व्याख्याताः।

**(2) वृक्षरोपणकालः**-अजातशाखानजातलतांकुरान् वृक्षान् शिशिरे माघे फाल्गुने च रोपयेत्। जातशाखान् हिमागमे हेमन्ते मार्गशीर्षे पौषे च रोपयेत्। सुस्कन्धान् महाशाखायुक्तान् वर्षागमे प्रावृट्काले श्रावणे भाद्रपदे च रोपयेत्। काश्चित् **'जातशाखान् घनागमे वर्षागमे च सुस्कन्धान्'** इति पठन्ति। यस्मिन् वृक्षे लताकुरादिः न भवति तं शिशिरे, शाखाहीनं हेमन्ते, शाखिनं वर्षासु च रोपयेत्।

---

1. विक्रमोर्वशीयम् श्लो.66
2. वृहत्संहिता, वृक्षा. श्लो.2
3. शार्ङ्गधर पद्धतिः, उपवनविनोद श्लो.34/35

**अजातशाखान् शिशिरे जातशाखान् हिमागमे।**
**वर्षागमे च सुस्कन्धान् यथादिक्स्थान् प्ररोपयेत्।।**[1]

घनागमे वर्षा प्रारम्भे, वर्षागमे वर्षामध्यभागे इति। तांश्च यथा दिक्स्थान् पूर्वमन्यस्थानतस्तस्य तरोर्या पूर्वा दिग् साऽन्यत्र रोपितस्य पूर्वैव कार्या एवं सर्वासां दिशामानुलोम्यं वाच्यम्।

तथा च कश्यपः-

**अजातशाखा ये वृक्षाः शिशिरे तांश्च रोपयेत्।**
**जातशाखाश्च हेमन्ते रोपणीया विधानतः।।**[2]

शुचिः समाहितो भूत्वा वृक्षस्य स्नानानुलेपनैः पूजामर्चा कृत्वा रोपयेत्। एवम् करणे पूर्वपत्राण्यपि न शुष्यति।

**शुचिर्भूत्वा तरोः पूजां कृत्वा स्नानानुलेपनैः।**
**रोपयेद्रोपितश्चैव पत्रैस्तैरेव जायते।।**[3]

पुना रोपिताः वृक्षाः ग्रीष्मे सायं प्रातश्च सेक्तव्याः, सायम्-अपराह्णे, प्रातः-पूर्वाह्णे। शीतकाले दर्थात् हेमन्ते-शिशिरे दिनमन्तरे मध्ये वा सेक्तव्याः। वर्षासमये। यदा यदा भूः शुष्यति, तदा तदा च सेक्तव्याः।

**सायं प्रातश्च घर्मर्तौ शीतकाले दिनान्तरे।**
**वर्षासु च भुवः शोषे सेक्तव्याः रोपिता द्रुमाः।।**[4]

सुरपालवृक्षायुर्वेदानुसारेण श्रावणमासे खिरनी, आम्रः दाडिमः, बकुलादेः, भाद्रपदमासे राजकोशादिः लकुचारादिः आम्रप्रभृति-वृक्षाणां रोपणं करणीयम् आषाढमासे तु कस्यापि वृक्षस्य रोपणं कर्तुं शक्यते। परञ्च पौष-माघमासे शैत्याधिक्यात् कस्यापि वृक्षस्य रोपणं न विधेयम्।

**( 3 ) रोपितानां वृक्षाणां किं प्रमाणमन्तरं कार्यम्-**

वृक्षरोपणे द्वयोः वृक्षयोः मध्ये समुचितम् अन्तरम् अपेक्षते। तत्र वृक्षाणां स्थानात् स्थानात् प्रदेशात् प्रदेशाद्यदन्तरं विंशतिर्हस्ता वृक्षस्य समन्ततस्तदुत्तमं प्रमाणम्, यच्चानन्तरं षोडशहस्तान्तरं तन्मध्यमम्, यदन्तरं द्वादशहस्तान्तरं तदवरं निकृष्टमित्यर्थः। एतदुक्तं भवति-यत्रैको वृक्षो रोपितस्तस्माद्विंशतिकेऽन्तरे षोडशके वा अन्यद्रोपणीयमिति।

---

1. वृहत्संहिता, वृक्षा. श्लो.6
2. काश्यपसंहिता, वृक्षा. श्लो. 6, वृहत्संहिता-श्रीभट्टोत्पलटीका पृ.658
3. वृहत्संहिता, वृक्षा. श्लो.8
4. वृहत्संहिता, वृक्षा. श्लो.9

**उत्तमं विंशतिर्हस्ता मध्यमं षोडशान्तरम्।**
**स्थानात् स्थानान्तरं कार्यं वृक्षाणां द्वादशावरम्।।[1]**

**तथा च कश्यपः-**

**अन्तरं विंशतिर्हस्ता वृक्षाणामुत्तमं स्मृतम्।**
**मध्यमं षोडशं ज्ञेयमधमं द्वादशं स्मृतम्।।[2]**

उक्तं च अग्निपुराणे वृक्षाणां मध्ये समुचितम् अन्तरं विना परस्परसंसक्तावृक्षाः न सम्यक् वृद्धिं प्राप्नुवन्ति।

**अभ्याससजातास्तरवः संस्पृशन्तः परस्परम्।**
**मिश्रैर्मूलैश्च न फलं सम्यग्यच्छन्ति पीडिताः।।[3]**

अतः वृक्षाणां सन्निवेशः समुचितमन्तरम् अपेक्ष्यते।

**(4) व्याधिप्रकारः**-वृक्षायुर्वेदपरम्परानुसारेण वृक्षेषु व्याधिः द्विविधः आन्तरिकः, बाह्यश्च भवति।

**शरीराङ्ग तु भेदेन द्विप्रकाराः समासतः।**
**सर्वभूरूह जातीनामान्तकः परिकीर्तितः।।[4]**

आयुर्वेदस्य त्रिदोषस्य सिद्धान्तानुसारेण वृक्षेष्वपि वात-पित्त-कफादिदोषवैषम्यात् रोगाः उत्पद्यन्ते।

**तत्र वातात्कफात्पित्ताच्छरीराणां समुद्भुवाः।**
**आगन्तूनां समुत्पत्तिः कीटशीतादिभिर्भवेत्।।[5]**

**(क) वातजन्यव्याधिः**- वातजन्यदोषाः भूमेः अत्यधिकमात्रायां रुक्ष-कषायादि-तत्त्वानां सिञ्चनस्य कारणात् जायन्ते। अस्य दोषस्य कारणात् वृक्षाः कृशकायाः भवन्ति तेषां पत्राणि ग्रन्थियुक्तानि जायन्ते, फलान्यपि प्रायेण न्यूनरसमयानि भवन्ति।

**तत्र रूक्षकषायादि द्रव्यैरत्यर्थ सेचितैः।**
**भूमि संशोषणाद्वृक्षे भवन्त्यनलजागदाः।।[6]**

---

1. वृहत्संहिता, वृक्षा. श्लो.12
2. **काश्यपसंहिता, वृक्षा. श्लो.6, वृहत्संहिता-श्रीभट्टोत्पलटीका पृ.658**
3. वृहत्संहिता, वृक्षा. श्लो.13
4. सुरपालविरचित वृक्षा.श्लो.165
5. सुरपालविरचित वृक्षा.श्लो.166
6. सुरपालविरचित वृक्षा.श्लो.167

लक्षणम्-

**ते कार्श्यकुकृता ग्रन्थि गुटिकारुढपत्रता।**
**कर्क्वशाल्यरसा स्वादुफलता वेति कीर्तिता।।[1]**

**( ख ) पित्तजन्यव्याधिः**- पित्तजन्यदोषःग्रीष्मकालस्यान्ते वर्षाकालस्य प्रारम्भे जायते। व्याधिना तेषां पत्राणि पीतानि जायन्ते अकाले च फलानां क्षरणं जायते।

**कट्वम्ल-लवणैस्तीक्ष्णैर्द्रव्यैरर्त्थ सेचि ( वि? ) तैः।**
**भवन्ति पित्तजा रोगा ग्रीष्मकाले घनागपये।।[2]**

लक्षणम्-

**ते ( तेणी? ) पीतपत्रताऽकाले फलस्रावो विशोषणम्।**
**पत्र-पुष्प-फल ( र्ल ) म्लानि सदनं चेति प्रकीर्त्तिताः।।[3]**

**( ग ) कफव्याधिः**- वृक्षाणां कफजन्यदोषःशीतकाले जायते, यदा तेषां सिञ्चनं क्रियते। व्याधिना फलानां न्यूनता पत्राणाञ्चावृद्धिः जायते।

**स्वादु स्निग्धाम्ल शीताद्यैर्द्रव्यैरत्यर्थ सेचितैः।**
**हिमागमे -वसन्ते च भवन्ति कफजागदाः।।[4]**

लक्षणम्-

**ते चातिकालफलता पाण्डुत्वं कुब्ज-पत्रता।**

**अवृद्धि फलिते नीरसता चेति प्रकीर्तिताः।।[5]**

**( 5 ) रोगज्ञानम्**- शीतेन वातेन तपेन च रोगस्तेषां जायते उत्पद्यते, तथा च पाण्डुपत्रता वर्णानां पाण्डुत्वम्, प्रबालानामङ्कुराणामवृद्धिरसहीनता, शाखानां शोषो नीरसता रसस्य च स्रुतिः स्रावः एतैः चिह्नेस्तरुः सरोगो ज्ञेयः।

**शीतवातातपै रोगो जायते पाण्डुपत्रता।**
**अवृद्धिश्च प्रबालानां शाखाशोषो रसस्रुतिः।।[6]**

---

1. सुरपालविरचित वृक्षा.श्लो.168
2. सुरपालविरचित वृक्षा.श्लो.171
3. सुरपालविरचित वृक्षा.श्लो.172
4. सुरपालविरचित वृक्षा.श्लो.169
5. सुरपालविरचित वृक्षा. श्लो.170
6. वृहत्संहिता, वृक्षा. श्लो.14

**(6) बीजोपचार-विधिः**- यदा वृक्षाणां पक्व-फलानां बीजानां संरक्षणं विधीयते तत्कृते प्रथमं रात्रौ पक्व-फलानां दुग्धे निमज्जनं विधेयम्। तदन्तरमपरस्मिन् प्रातःकाले तानि दुग्धात् पृथक् विधाय गोमयेन रूक्षाणि विधेयानि। ततश्च सूर्यरश्मिभिः तेषां तपनं विधेयम्। प्रक्रिया चेयं दशदिनानि विधेया ततः बीजानि तानि सुफलानि भवन्ति, इति मतम्।

**वासराणि दश दुग्धभावितं बीजमाज्यहस्तयोजितम्।**
**गोमयेन बहुशो निरूक्षितं कौडमार्गपिशितैश्च धूपितम्।।**[1]

**(7) चिकित्सा-विधानम्**- अथानन्तरमेतेषां वृक्षाणां चिकित्सा भवति। आदौ प्रथमं शस्त्रेण व्रणादिविशोधनं कार्यम्। यद्विवर्ण क्लिन्नमवयवं तच्छस्त्रेण निवर्तयेत्। विडङ्गः, घृतमाज्यम्, पङ्कः कर्दम एतैरेकीकृतैः आक्तानत्यन्तं लिप्तान् कुर्यात्। ततः क्षीरवारिणि क्षीरसंयुक्तेन जलेन सेचयेत्। एवं कृते नीरुजा भवन्ति।

**चिकित्सितमथैतेषां शस्त्रेणादौ विशोधनम्!**
**विडङ्गघृतपङ्काक्तान् सेचयेत् क्षीरवारिणा।।**[2]

**शाखाविटपपत्रैश्च छायया विहिताश्च ये।**
**येऽपि पर्णफलैर्हीना रुक्षाः पत्रैश्च पाण्डुरैः।।**

**कर्दपेनविडङ्गैश्च घृतमिश्रैश्च लेपयेत्।**
**क्षीरतोयेन सेकः स्याद्रोहणं सर्वशायिनाम्।।**[3]

विष्णुधर्मोत्तरपुराणस्य वृक्षायुर्वेदः द्रष्टव्यः-

**आदौ संशोधनं तेषां किञ्चिच्छस्त्रेण कारयेत्।**
**विडङ्गघृतपङ्काक्तान्सेचयेत् क्षीरवारिणा।।**[4]

---

1. वृहत्संहिता, वृक्षा. श्लो.19
2. वृहत्संहिता, वृक्षा. श्लो.15
3. काश्यपसंहिता, वृक्षा. श्लो.15/16, वृहत्संहिता-श्रीभट्टोत्पलटीका पृ.658
4. विष्णु.ध.पु.वुक्षा.श्लो. 18

ISSN - 0974-8946
अप्रैल-जून 2018

शोधप्रभा
वर्षः 43, द्वितीयाङ्कः

# वास्तुशास्त्रे आय-दिक्साधनम्

**श्रीमती रितिका अग्रवालः***

वास्तुशास्त्रस्य ज्ञानपरम्पराऽनवरतरूपेण वैदिकालादेव प्रवहमाना वर्तते। वस्तुतः वास्तुशास्त्रस्य मूलसिद्धान्तानां विवेचनम् अथर्ववेदस्योपवेदे स्थापत्यवेदे प्राप्यते। गृहनिर्माणसन्दर्भे शास्त्रमिदमस्माकं पथप्रदर्शकमस्ति। सन्दर्भेऽस्मिन् वास्तुशास्त्रस्य ये मर्मज्ञाः भवन्ति स्म ते स्थपति नाम्ना व्यवह्रियन्ते। कालान्तरे स्थापत्यशास्त्रमिदमेव वास्तुशास्त्रं शिल्पशास्त्रं वा ज्ञायते। अस्माकं भारतीयवास्तुशास्त्रस्य परमोद्देश्यं वर्तते यत् निवासिनां कृते सर्वविधसुख-समृद्धि-शान्ति-सुरक्षा च भवेत्। जीवने आहार-विहार-परिधान-आवासादीनां व्यवस्था समेषां कृते सुलभा भवेत् अथ च अस्माकं जीवने पुरूषार्थ-चतुष्टय अर्थाद् धर्म-अर्थ-काम-मोक्षादीनां सम्पूर्तिहेतवे सुवास्तुक्षेत्रस्य अस्माकमावासस्य वा महत्वपूर्णभूमिका भवति। प्रसंगेऽस्मिन् आवासदृष्ट्या वास्तुशास्त्रस्य चर्चा तु अवश्यमेव भवेदेव। आवासव्यवस्थायां कस्यां दिशि अस्माकं पूजागृहम्, अथ च कस्यां दिशि शयनकक्ष-कोषागार-स्नानगृह-महानस-भोजन-स्वागत-अध्ययनादि-कक्षानां स्थितिः श्रेयस्करी भवति। ज्योतिर्विज्ञानशाला-यज्ञयागादिकर्म-गृहनिर्माणादिषु सर्वप्रथमं दिक्साधनस्य परमावश्यकता भवति। साम्प्रतिकसमाजे दिक्साधनाय कुतुबनुमा अर्थात् कम्पास इति यन्त्रं प्रयुज्यते। निम्नस्तरीय कुतुबनुमायन्त्रेण सम्यक् दिशा-ज्ञानं नैवं भवितुं शक्यते। वास्तुशास्त्रे तु सूक्ष्म-दिक्साधनस्य परमावश्यकता भवति। तत्र प्रथमम् आयसाधनमपेक्षितं भवति। भूमेः विस्तारेण हतं दैर्घ्यं विभजेदष्टभिस्तदा यच्छेषं तद् भवेदायः यथा- ध्वजधूम्रसिंहश्वानवृषखरगजकाकाः क्रमेण आयाः भवन्ति। इमे पूर्वादिषु अष्टदिक्षुक्रमेण स्थिताः भवन्ति। अर्थात् पूर्वाद्यष्टदिशः एतेषां स्व-स्वदिशः भवन्ति।[1]

आयसाधनस्याऽयमेव प्रकारो विभिन्नेषु ग्रन्थेषु भिन्न-भिन्नश्लोकानां माध्यमेन कथितोऽस्ति। आयसाधनस्य वर्णनं बृहद्वास्तुमाला, वास्तुरत्नावली, गृहप्रकरणम्, वास्तुमाणिक्यरत्नाकरः, समराङ्गणसूत्रधारः, मयमतम्, मुहूर्तचिन्तामणिः, ज्योति-र्विदाभरणमित्यादिषु ग्रन्थेषु वर्तते।

---

* शोधच्छात्रा, वास्तुशास्त्रविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली

1. विस्तारेण हतं दैर्घ्यं ध्वजादीनामवस्थितिः। वास्तुसौख्यम् 5/120-121

**ध्वजादीनां फलम्-**

ध्वजादि-आयानां क्रमशः फलानि-यशः शोको जयो वैरं धनं निर्धनता सुखं रोगाश्च भवन्ति[1]। अनेन प्रकारेणायादीनां फलमन्येष्वपि ग्रन्थेष्विदमेव लभ्यते। यथा बृहद्वास्तुमाला, वास्तुरत्नावली, ज्योतिर्निबन्धः, समराङ्गणसूत्रधारः, गृहप्रकरणम् इत्यादि।

अन्यग्रन्थेष्वपि वर्णितं यत् ध्वजे बहुधनलाभः, धूम्रे भ्रमः, सिंहे लक्ष्मी, श्वाने कलहः, वृषे धनं धान्यं च, खरे स्त्रीनाशः, गजे पुत्रलाभः, ध्वांक्षे च शून्यता भवति[2]।

**एतेषामायानामुपयोगः**

**हस्तिनो निवासाय ध्वजगजावायौ शुभौ भवतः।**

अश्वस्य निवासाय ध्वजखरवृषाः शुभाः भवन्ति। उष्ट्रस्य निवासे गजवृषध्वजाः शुभाः भवन्ति। पशुनिवासे वृषध्वजावायौ शुभौ भवतः।

शय्यायां वृषः मण्डपे सिंहः आयः शुभो भवति। पात्रे, छत्रे, वस्त्रे च वृषध्वजावायौ शुभौ भवतः। चरणपादुकायामुपानहि च सिंहध्वजावायौ बहुश्रेष्ठौ स्तः। उक्तेऽनुक्ते च सर्वत्र ध्वजः शुभो भवति। सिंहस्य स्थाने ध्वजोऽर्थात् ध्वजः स्वस्मात् पूर्वे तथा च सिंहः दक्षिणेऽपि शुभोऽस्ति। एवञ्च ध्वजः सिंहश्चोभौ स्वस्य गजस्य वा स्थाने ध्वजः सिंहो गजो वा स्वस्य वृषस्य च स्थाने पश्चिमेऽपि दातुं शक्यन्ते। वृषः केवलं पश्चिमेऽन्यदिक्षु नैव दातुं शक्यते। किन्तु ध्वजः सर्वत्र पूज्यो ग्राह्यश्चास्ति। आयदिशि मुख्यद्वारं शुभं भवति[3]।

एतेषामायानामुपयोगोऽन्येष्वपि ग्रन्थेषु समानरूपेण कृतोऽस्ति।

1. कीर्तिः शोको जयो वैरं धनं निर्धनता सुखम्।
   रोगश्चेति गृहारम्भे ध्वजादीनां फलं क्रमात्।। वास्तुसौख्यम् 5/136
2. ध्वजे बहुधनं प्रोक्तं धूम्रे चैव भ्रमो भवेत्।
   सिंहे च विरला लक्ष्मीः श्वाने च कलहं भवेत्।।
   धनं धान्यं वृषे चैव खरेषु स्त्री विनाशनम्।
   रव्ये पुत्रलाभश्चध्वांक्षे सर्वत्रशून्यता।। बृहद्वास्तुमालाप्रयोगः श्लोक 4-5, पृ. 50
3. गजाये वा ध्वजाये वागजानां सदनं शुभम्।
   अश्वालयं ध्वजाये च खराये वृषभेऽपि वा।।
   उष्ट्राणां मन्दिरं कार्य गजाये वा वृषे ध्वजे।
   पशुसद्म वृषाये च ध्वजाये वा शुभप्रदम्।।
   शय्यासु वृषभः शस्तः पीठे सिंह शुभप्रदः।
   अन्यत्र च्छत्रवस्त्राणां वृषाये वा ध्वजेऽपि वा।।
   पादुकोपानहौ कार्यौ सिंहाख्येऽप्यथवा ध्वजे।
   उक्तानामप्यनुक्तानां मन्दिराणां ध्वजः शुभः।। वशिष्ठसंहिता, उल्लेखः वास्तुसौख्यम् 5/127-130

## आयानां शुभाऽशुभत्वम्

ध्वजादयः अष्टावायाः स्व स्व दिक्षु (पूर्वादिक्रमेण) गृहद्वारे शुभाः भवन्ति। अर्थाद्यस्यायस्य या दिक्ऽस्ति तस्यां दिशि मुख्यद्वारो भवेत् गृहे स एवायो भवेत्। अष्टष्वायेषु ध्वजगजसिंहवृषाय सम्बन्धीनि गृहाणि शुभानि भवन्ति। ध्वजसम्बन्धिभवनं सर्वा सुदिक्षु शुभं भवति। वृषसम्बन्धिगृहं स्वदिशि पश्चिमे एव शुभं भवति।

सम्पुटे, गृहपीठे, मृगया गृहे, कीटगृहे राजभवनस्य गृहे वृषो गजः सिंहस्य च आयः शुभो भवति। तथा च गज आयो वाप्यां कूपे तडागेऽपि श्रेष्ठो भवति।, सिंह आय आसने (सिंहासने) शयने (खट्वायाम्) तथा च गजो भोजनपात्रेषु , वृषश्छत्रादीनामावरणस्य वस्तुषु शुभो भवति[1]।

सर्वप्रकारेऽग्नौ तथा चाऽग्निना जीविकायाश्चालनैर्युक्तेषु गृहेषु धूम्र, आयो, म्लेच्छजातिगृहेषु श्वानः आयः प्रशस्तो भवति। वेश्यालये खरः, कुटि (वाधिका) गृहे काक आयः प्रासादपुर-भवन-निर्माणेषु वृषः, सिंहः, गजः इत्येते आयाः शुभाः भवन्ति।[2]

महानसे (पाकशालायां) अग्निशालायाम्, तथा चाग्निनोपजीविनां गृहेषु धूम्र आयो दातव्यः। यवनानाम् अन्त्यजानां च गृहेषु श्वानायः, क्षत्रियाणां वैश्यानां च गृहेषु तथा च प्रासादे पुरे मन्दिरेः वृषः सिंहो गजः इत्येतं आयाः शुभाः भवन्ति। तथा च सर्वे आयाः स्व-स्व दिक्षु शुभाय भवन्ति[3] यथोक्तं-

**'सर्वे स्वाभिमुखाः शुभाः' अन्यमतमपि एवं वर्तते-**[4]

---

1. स्वस्वस्थाने ध्वजः श्रेष्ठो गजः सिंहस्तथा वृषः।
ध्वजः सर्वगतो देयो वृषं नान्यत्र दापयेत्।।
वृषसिंहगजाश्चैव खेटे कर्कटकोटयोः।
द्विपः पुनः प्रयोक्तव्यो वापीकूपसरेषु च।।
मृगेन्द्रमासने दद्याच्छयनेषु पुनर्गजः।
वृषं भोजनपात्रेषु च्छत्रादिषु पुनर्ध्वजः।। वास्तुसौख्यम् 5/122-124
2. अग्निवेश्मसु सर्वेषु गृहे वह्न्युपजीविनाम्।
धूम्रं नियोजयेत्केचिच्छ्वानं म्लेच्छादिजातिषु।।
खरो वेश्यागृहे शस्तो ध्वांक्षश्चापि कुटीषु च।
वृषं सिंहौ गजश्चापि प्रासादपुर वेश्मसु।। विश्वकर्मप्रकाशः, उल्लेखः वास्तुसौख्यम् 5/125-126
3. महानसेऽग्निशालायां गृहे चारन्युपजीविनाम्।
धूम्रं दद्यात् तथा श्वानं यवनान्त्यजयोर्गृहे।।
खरो वेश्यागृहे देयो ध्वजः क्षत्रियविट्गृहे।
वृषं सिंह गजं दद्यात् प्रासादपुरमन्दिरे।। च्यवनः, उल्लेखः वास्तुसौख्यम् 5/131-132
4. ब्राह्मणस्य ध्वजं दद्यात् सिंह दद्यात्तुक्षत्रिये। वैश्यस्य च वृषं दद्याद्गजं शुद्रे सदार्पयेत्।
चर्मकारगृहे धूम्रः श्वानोऽपि रजकस्य च। खरो चैव तथा वेश्यां धवांक्षे चान्यत्र जतिषुः।।
अन्यमतः बृहदास्तुमालाप्रयोगः पृ. 52

ध्वजाये ब्राह्मणानां पश्चिमे मुखे द्वारं सिंहे क्षत्रियाणामुत्तरमुखं द्वारं वृषे वैश्यानां पूर्वमुखं द्वारम्, गजे शूद्राणां दक्षिणमुखं द्वारं शुभं भवति। तथा च वस्त्रे, धर्मशालायाम्, कलशे, स्तम्भे, ध्वजे ध्वज आयः शुभो भवति। वृषः गजायो भूम्यां (मृत्तिकायां भित्याम्) भूक्षेत्रविभागे तथा च साधारणे तृणगृहे शुभो भवति[1]ध्वजे परास्यं विप्राणां राज्ञां सिंहेऽप्युदङ्मुखम्।

यन्त्रगृहे, शस्त्रगृहे, रथगृहे सिंह आयः शुभो भवति। भाण्डे (पात्रे)गजायः धान्ये, जले, गोगृहे, अश्वनिवासे हस्तिशालायां वृष आयः शुभो भवति[2]।

वाद्यगृहे विवाहे वेद्यां गजः सिंहो वृषः आयः शुभो भवति[3]।

**दिक्साधनम्**

विश्वकर्मणो मतानुसारेण प्रासादे, सदने, अलिन्दे, द्वारे, भित्यां, दिङ्मूढत्वे सति कुलस्य नाशो भवति। अतो निर्माणात्पूर्व दिक्साधनमावश्यकमस्ति[4]।

उदकेन समीकृतायां भूमाविष्टप्रमाणं वृत्तं विलिख्य तस्य केन्द्रे द्वादशाङ्गुलशङ्कुं निवेश्य तस्य छाया तस्मिन् वृत्ते यत्र पूर्वाह्ने प्रविशति अपराह्ने यतो निर्गच्छति तत्र क्रमशः पश्चिमपूर्वदिशौ भवतः। परन्तु यस्मिन् काले छायाप्रवेशो जातो यस्मिन् काले च निर्गमस्तात्कालिकयोरर्कयोः क्रान्तिज्ये साध्ये। तयोरन्तरात् तस्याश्छायायाः कर्णेन गुणिताल्लम्बज्यया भक्ताद्यल्लब्धमङ्गुलादिफलं तेनैन्द्री दिगुत्तरतश्चालिता स्फुटा भवति यद्युत्तरेऽयने रविर्वर्तते। यदि दक्षिणे तदा दक्षिणतः एवं स्फुटा प्राची। अन्यथा स्थूलेत्यर्थः। तन्मत्स्याद्याम्यसौम्ये दिशौ।

अथ प्रकारान्तरेणाह- ध्रुवमवलम्बसूत्रेण विद्ध्वा ध्रुवाभिमुखकीलकः सौम्या स्वस्थानकीलको याम्या। तन्मत्स्यात् पूर्वापरे। प्रथमं भाद्वयाग्रदर्शने दिग्ज्ञानमुक्तम्। इदानीमथवैकस्मादपि भाग्रतः। तच्चैवम् अभीष्टकाले शङ्कोर्भाग्रं चिह्नयित्वा तस्याश्छायायाः वक्ष्यमाणप्रकारेण भुजं कोटिं चानीय भुजकोटिमिते शलाके गृहीत्वा शङ्कुमूलाद्यथादिग्गतां कोटिशलाकां छायाग्राद्वयस्तदिग्गतां भुजशलाकां च तथा भुवि न्यसेद्यथा शलाकाग्रयोः संयुतिः स्यात्। एवं कृते सति कोटिः प्राच्यपर दिग्भवति। बाहुश्च याम्योत्तरा,

---

1. गजे शूद्रस्य याम्यास्यं वृषे पूर्वमुखं विशः ।।
   वस्त्रेषु धर्मशालायां कुम्भे स्तम्भे ध्वजे ध्वजः।
   गोगजौ भूगृहे देयौ साधारणतृणौकसि।। वास्तुसौख्यम् 5/133-134
2. यन्त्रे शस्त्रे रथे सिंहो भाण्डागारे शुभो गजः।
   धान्याम्बूस्थानगोश्वेभशालायां वृषभः शुभः।। वास्तुसौख्यम् 5/135
3. वाद्यगेहोद्वाहवेद्यां गजसिंहवृषाः शुभाः। वास्तुसौख्यम् पृ. 40
4. प्रासादे सदनेऽलिन्दे द्वारे कुड्ये विशेषतः।
   दिङ्मूढे कुलनाशः स्यात्तस्मात् संसाधयेद्दिशम्।। विश्वकर्मप्रकाशे उल्लेखः वास्तुसौख्यम्, श्लोक 19

यथोक्तं शिरोमणौ[1]।

दिक्साधनस्याऽयमेव प्रकारोऽन्येषु ग्रन्थेषु भिन्न-भिन्नश्लोकानां माध्यमेन कथितोऽस्ति। यथा सूर्यसिद्धान्तः ग्रहलाघवः, वास्तुमाणिक्यरत्नाकरः, गृहप्रकरणम्, मयमतम्, गणितसौख्यमित्यादिषु।

अवलम्बम् अथवा ध्रुवाभिमुखं स्थापितं विधाय शूल्बसूत्र (पारदसूत्र)- रूपरेखोपरिमित्स्य चिह्नं करणीयं तन्मत्स्योपरि मुखात् पुच्छगता रेखा भविष्यति। तथा च मत्स्यस्य मुखात् पुच्छगतमध्यबिन्दूपरि कृता लम्बरेखा दक्षिणोत्तरा भविष्यति[2] उज्जयिनीतो दक्षिणदेशनिवासिनो जनाश्चित्रास्वातिनक्षयोरन्तरेण पूर्वपश्चिमदिशयोः ज्ञानं कुर्युः। यथा दृष्टिं कस्यांश्चित् समानभूम्यां स्थितायाः नलिकायाः मूलभागे स्थिरां कृत्वा नलिकया चित्रानक्षत्रस्य वेधं कृत्वा नलिकां स्थिरां कुर्यात्, पश्चान्नलिकाग्रात् समायां भूम्यां लम्बं पातयेत्। पश्चादुभयोर्लम्बयोर्मूले चैकं सूत्रबंधनं कुर्यात्तस्य मध्ये बिन्दुः पूर्वा दिक् भविष्यति।

अनेन प्रकारेणोज्जयिनीत उत्तरभागे निवासिनः कृत्तिकानक्षत्रवेधेन प्राच्याः दिशः ज्ञानं कुर्यात्। यथा पूर्ववत् समानभूमौ नलिकायाः स्थानं कृत्वा कृतिकानक्षत्रस्य वेधं कृत्वा नलिकाग्रमूले च द्वाभ्यां बिन्दुभ्यां लम्बं भूमौ पातयेत्।

अनयोर्द्वयोर्लम्बयोमूले सूत्रबन्धनात् पूर्वापरादिशौ भविष्यतः। अस्मिन्मत्स्यो- त्पादनकरणाद् दक्षिणोत्तरा दिशौ भविष्यतः। अथवा सर्वत्र ध्रुवं दृष्ट्वा दक्षिणोत्तराया दिशः ज्ञानं कर्तव्यम्[3]।

कृत्तिकायाः, श्रवणस्य पुष्यस्य, चित्रायाः, स्वातेश्चान्तरं प्राच्याः दिशः स्वरूपमस्ति। एतेषां नक्षत्राणां वेधं युगमात्रे षडशीत्यङ्गुलक्षितिजादुपरि चागते सति करणीयम्[4]।

---

1. वृत्तेऽम्भः सुसमीकृतक्षितिगते केन्द्रस्थशङ्को क्रमाद्।
भागं यत्र विशत्यपैति च यतस्तत्रापरैन्दुयौ दिशौ।।
तत्कालापमजीवयोस्तु विवराद्भाकर्णमित्याहता-
ल्लम्बज्याप्तमिताङ्गुलैरयनदिश्यैन्द्री स्फुटा चालिता।
तन्मत्स्यादथ याम्यसौम्यककुभौ सौम्या ध्रुवे वा भवे-
देकस्मादपि भाग्रतो भुजमितां कोटीमितां शङ्कुतः।
न्यस्येद्यष्टिमृजुं तथा भुवि यथा यष्टयग्रयोः संयुतिः
कोटिः प्राच्यपरा भवेदिति कृते बाहुश्च याम्योत्तरा।। सिद्धान्तशिरोमणिः, त्रिप्रश्नाधिकारः, श्लोक 8-9

2. ध्रुवलम्बकरेखाया रेवान्ते सौम्ययाम्यहरितौ स्तः।
तन्मत्स्यपुच्छमुखतः पश्चिमपूर्वाभिधे विद्यात्।। शूल्बसूत्रं स्फुटप्रकरणम्, उल्लेखः
संग्रहशिरोमणौ विंशीप्रभायां, श्लोक 53

3. प्राक्साध्योज्जयिनीस्थलाद्यमेदिशि त्वाष्ट्रानिलाभ्यन्तरा।
सौम्येतोऽग्न्युदयादुदग्ध्रुवमुखादिदङ्मूढके स्यान्मृति।। मुहूर्तमार्तण्डः,उल्लेखः वास्तुरत्नावली,पृ.16. कृत्तिका

4. श्रवणं पुष्यं चित्रास्वात्योर्यदन्तरम्।
एतत्प्राच्या दिशो रूपं युगमात्रोदिते पुरे।। कात्यायनशूल्बसूत्रम्,उल्लेखः वास्तुरत्नावली, पृ.39.17.

सप्तर्षितारागणे ये द्वे तारे प्रथमे स्तः ते मार्कटिके कथिते स्तः। ते ध्रुवश्च यदा एकस्मिन् सूत्रे भवेयुः अर्थात् शङ्कुस्थापनात् यदा शङ्कोः सन्मुखे तिस्रस्तारा: भवेयुः तदा शङ्कोर्दक्षिणभागे एकः दीपकः स्थापनीयः, दीपशिखा शङ्कुः च यदा गतास्ति तत्र तारा एकस्मिन् भागे भवेयुस्तदा शङ्कुतो दीपकं दक्षिणस्यां दिशि जानीयात्। तथा च दीपशिखा शङ्कुमूले च कृता रेखां दक्षिणोत्तरां जानीयात्। अस्यां मत्स्योत्पादनकरणात् पूर्वापरादिक् भवति।

अथवा द्वात्रिंशदङ्गुलव्यासार्धेन निर्मितस्य वर्तुलवृत्तस्य मध्ये द्वादशाङ्गुलं शङ्कुं स्थापयेत् यत्र तस्य छाया वृत्ते प्रवेशं कुर्यात् सा पश्चिमदिक्, यत्र सा छाया निस्सरति सा दिक् पूर्वा ज्ञातव्या। अनेन प्रकारेणास्योपरि मत्स्योत्पादनाद् उत्तरा-दक्षिणा दिक् भविष्यति[1]।

नक्षत्रैर्दिक्ज्ञानस्य प्रकारोऽन्यग्रन्थेष्वपि विशदरूपेण प्राप्यते। यथा विश्वकर्मवास्तुशास्त्रे, अपराजितपृच्छायां, वास्तुराजवल्लभे, मानसारे, काश्यपशिल्पे च।

### केवलं रात्रावेव सुलभरीत्या दिग्ज्ञानमाह-

दृष्टिं नलिकायाः मूले स्थिरां कृत्वा नलिकया ध्रुवस्य वेधं कृत्वा नलिकां स्थिरां कुर्यात्। पुनः नलिकाग्रान्मूलाच्च लम्बद्वयं भूमौ पातयेत्, तयोर्द्वयोर्लम्बमूल-योर्गतारेखा याम्योत्तरा भवति। तस्यां मत्स्यरेखोत्पादनात्पूर्वापरादिशा भवति। यद्यत्र निरक्षदेशादुत्तरदिशिनिवासी दिग्ज्ञानं करोति चेत्तदा यष्ट्यग्रे पतितं लम्बमूलं बिन्दूत्तरं भवति। यष्ट्या मूलात् पतितं लम्बमूलबिन्दुर्दक्षिणबिन्दुर्भवति। निरक्षदेशाद्दक्षिणे निवासिनां कृतेऽस्य वैपरीत्ये जानीयात्[2]।

---

1. शङ्कोर्नेत्रगुणे तु मण्डलवरे छायाद्वयान्मत्स्ययो-
र्जाता यत्र युतिस्तु शङ्कतलतो याम्योत्तरे स्तः स्फुटे।। वास्तुराजवल्लभम् उल्लेखः वास्तुरत्नावली, पृ.39
2. दक्षिणनेत्रङ्गसंसक्तमूलयष्ट्यग्रसंदृशा।
पश्येन्नाध्रुवभं तस्मिन् क्षणे यष्टयग्रमूलयोः।।
लम्बपातौ भूमिभागे तद्रेखा सौम्यदक्षिणम्।
सूत्रं व्यक्षात्सौम्यभागे याम्ये याम्योत्तरं क्रमात्।।
पूर्वापराख्यं तन्मत्स्यात्सूत्रमर्कोदयास्ततः।
एवं रात्रौ दिशः साध्याः शेषं पूर्वोदितं भवेत्।। वास्तुरत्नावली, पृ. 36

ISSN - 0974-8946
अप्रैल-जून 2018

शोधप्रभा
वर्ष: 43, द्वितीयाङ्क:

# पातञ्जलयोगसूत्रे व्यक्तित्वविकाससम्बद्धं शैक्षिकतत्त्वम्

श्रीनवीन आर्य:*

शिक्षाया: प्रमुखमुद्देश्यं व्यक्ते: सर्वाङ्गीणविकासो वर्तते। व्यक्तित्वविकासेन अन्तर्दृष्टिर्विकसिता भवति। अन्तर्दृष्ट्या ज्ञानेन वा आत्मविश्वासस्योत्पत्तिर्भवति। समाजे प्रत्येकं व्यक्तेर्व्यक्तित्वं भिन्नं-भिन्नं वर्त्तते। व्यक्तिर्यथा व्यवहारं करोति तस्य व्यक्तित्त्वं तथैव प्रकटितं भविष्यति। व्यवहारादेव व्यक्तित्वस्याभिव्यक्तिर्भवति। व्यक्तित्वसन्दर्भे आलपोर्टमहोदय: कथयति- ''व्यक्तित्वं मनोदैहिकव्यवस्थानां तद् गत्यात्मकसङ्घटनं वर्तते, यद् वातावरणेन सह तस्य अपूर्वसमायोजनं निर्धारितं करोति।[1] कोऽपि मानव: स्वधारणाया: प्रक्रियया कार्य करोति, अन्यै: सह व्यवहरति च। इत्थं क्रियमाणो व्यवहारो मानवस्य व्यक्तित्वं प्रकाशितं करोति। मानवेषु केचन निर्भीका:, केचन भीता:, केचन क्षमावन्त:, केचन निर्दया:, केचन सदाचारवन्त:, केचन दुराचारवन्त:। केचन जना: व्यक्तित्वस्याभिप्रायं मानवस्य बाह्यशारीरिकाकारेण मन्यन्ते। एषा व्याख्या न समीचीना तत्सम्बन्धानि अनेकानि उदाहरणानि द्रष्टुं शक्यन्ते यद् केषाञ्चित् बाह्याकृतिस्तु आकर्षका भवन्ति। परन्तु तेषां व्यक्तित्त्वमुच्चं न भवति। अत: वक्तुं शक्यते यत् व्यक्तित्वं केवलं बाह्यसंरचनया एव निर्धारितं न भवति अपितु तस्मै केचन आन्तरिकगुणापि अपेक्षिता:। आन्तरिकगुणान् विना श्रेष्ठव्यक्तित्वं न सम्भवति। सत्यमिदमस्ति यद् मानवस्य व्यक्तित्त्वं एकेन न अपितु नैकै: कारकै: निर्मितं भवति।

वैयक्तिकधारणाधारेण एव व्यक्तित्वसम्बन्धितसिद्धान्तानां निरूपणमभवत्। यथा- ''सिगमण्ड फ्रायडमहोदयस्य'' मनोविश्लेषणात्मकसिद्धान्त:। ''शैलडॉन'' महोदयस्य रचनासिद्धान्त:। ''आर.बी. कैटल'' महोदयस्य प्रतिकारकप्रणालीसिद्धान्त:। ''मुर्रेमहोदयस्यसिद्धान्त'', ''आलपोर्टमहोदयस्य'' सिद्धान्तश्च इत्यादय: व्यक्तित्वसम्बद्धसिद्धान्ता: सन्ति। एवञ्च मनोवैज्ञानिकाधारेण प्रमाणिका अपि सन्ति। महर्षिपतञ्जलिना प्रतिपादिते योगसूत्रे व्यक्तित्वविकाससन्दर्भे विशदविवेचनं वर्तते। तत्र अहिंसा, सत्यम्, अस्तेयम्, ब्रह्मचर्यम्, अपरिग्रह:, शौच:, सन्तोष:, तप:, स्वाध्याय:, ईश्वरप्रणिधानम्, आसनम्, प्राणायाम:, धारणा:, ध्यानञ्चनैकानि शैक्षिकानि तत्त्वानि सन्ति; यानि मानवस्य उत्तमव्यक्तित्त्वस्य विकासे साहाय्यं कुर्वन्ति।

---

* शोधच्छात्र:, शिक्षाशास्त्रविभाग:, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली- 110016

1. शिक्षामनोविज्ञानम्, पृ.206

**व्यक्तित्त्वस्य विशेषताः -**

श्रेष्ठव्यक्तित्वे निम्नलिखितविशेषता भवन्ति।

**1. आत्मचेतना** - व्यक्तित्त्वस्य प्रथमा विशेषता आत्मचेतना वर्तते। आत्मचेतना सा शक्तिः वर्तते, यथा मानवः स्वकीयसम्बन्धे जानाति यत् सः किमस्ति। स इदमपि जानाति यदन्ये जनाः तस्य विषये किं चिन्तयन्ति। इदमेव ज्ञानं वास्तविकव्यवहारान् निर्धारयति। मानवो वास्तविकरूपेण स नास्ति यः स्वविषये चिन्तयति, मानवो वास्तविकरूपेण सोऽपि नास्ति योऽन्ये तस्य विषये चिन्तयन्ति, अपि तु मानवः सोऽस्ति योऽयं जानाति यदन्ये मम विषये किं चिन्तयन्ति? इयमेव आत्मचेतना भवति। पातञ्जलयोगसूत्रेऽपि "योगश्चित्तवृत्तिनिरोधः"[1] अर्थात् चित्तवृत्तीनां निरोधः एव योग उच्यते। चितवृत्तीनां निरोधेन व्यक्तित्वम् अन्तर्मुखं भवति। योगेन (योगबलेन) योगी स्वनिरीक्षणमपि करोति।

**2. सामाजिकता** - मानव एकः सामाजिकप्राणी वर्तते। समाजाद्भिन्नं मानवस्य कल्पना अद्यतनीय युगे न कर्तुं शक्यते। यतः समाजाद् बहिः तस्य न तु जीवनमेव सम्भवति, न च विकासः। सः समाजे निवसति एव, न केवलं एतद्, अपि तु समाजे स्थित्वा तेन सामाजिकमान्यतानां परम्पराणां मूल्यानामाचारविचारव्यवहाराणां च पालनमपि करणीयम्। समाजस्यान्यैः सदस्यैः सह मिलित्वा चलनमपेक्षितमेव। उत्तमव्यक्तित्त्वेन एतानि कार्याणि सरलतया कर्तुं शक्यते। पातञ्जलयोगसूत्रे निहितेन अष्टाङ्गयोगेन श्रेष्ठसामाजिकव्यक्तित्त्वस्य निर्माणं भवति। समाजे प्रचलितः हिंसाभावः, असत्यभाषणम्, धूम्रपानम्, मद्यपानम्, चौर्यभावः, दुर्व्यसनम्, दुर्व्यापारः तथा च अन्येन्द्रियजनितसांसारिकविषयाणां च आसक्त्या सम्बद्धदुराचारः इत्यादि सर्वं समूलोन्मीलनम्, योगमार्गेण कथं शक्यते।

**3. दृढेच्छाशक्तिः** - श्रेष्ठव्यक्तित्वयुक्तमानवे दृढेच्छाशक्तिर्भवति। अनयैव सक्रियरूपेण कार्यं करोति, तथा च जीवने आगतानां अनेकसमस्यानां सङ्घर्षाणां च धैर्येण सह समाधानं करोति। अष्टाङ्गयोगान्तर्गतं "तपः" दृढेच्छा पालने महत्त्वपूर्णभूमिकायाः निवर्हणं करोति।

**4. मानसिक-स्वास्थ्यम्** - उत्तमव्यक्तित्त्वस्य उत्तममस्तिष्कं भवति। व्यक्तित्वं मानसिकशक्तीनां सङ्घटनमस्ति। उत्तममानसिकस्वास्थ्यस्य संरचनायाः नियन्त्रणं सन्तुलितव्यवहारतर्कचिन्तनमित्यादीनां क्रियाभिर्भवति। अत उत्तमव्यक्तित्वस्य कृते उत्तममानासिकस्वास्थ्यमावश्यकं भवति। महर्षिपतञ्जलिद्वारा प्रतिपादितासनं प्राणायामश्च मानसिकस्वास्थ्याय मानसिकक्षमतायाः कृते च लाभप्रदाः सन्ति। 'स्थिरसुखमासनम्'[2] अर्थात् निश्चलं सुखपूर्वकमुपवेशनमासनम्। यथा- पद्मासनम्, वीरासनम्, भद्रासनम्, स्वास्तिकासनम् इत्यादयः। "तस्मिन् सति श्वासप्रश्वासयोर्गतिर्विच्छेदः प्राणायामः"[3] अर्थात् सत्यासनजये बाह्यस्य वायोराचमनं श्वासः। कौष्ठयस्य वायोर्निस्सारणं प्रश्वासः, तयोर्गतिविच्छेद उभयाभावः प्राणायामः। आसनात्, प्रणायामात्, धारणात्, ध्यानात् च ग्रहण क्षमता, धारणाशक्तिः तथा च स्मरणशक्तिः,

1. पातञ्जलयोगसूत्रम्, 1.2
2. पातञ्जलयोगसूत्रम्, 2.46
3. पातञ्जलयोगसूत्रम्, 2.49

तर्कशक्तिः, कल्पनाशक्तिः, स्मृतित्यादिषु वर्धते। पातञ्जलयोगसूत्रे वर्णितम् आसनम् प्राणायामश्च स्नायुसंस्थानं, मेरुदण्डं मस्तिष्कं च स्वस्थं, सजगं पुष्टं च कृत्वा मानसिकस्वास्थस्य वृद्धिं करोति। मानसिकव्याधीनां अस्वस्थतायाः अवस्थायां पर्याप्त उपचारे सहायको भवति आसनं प्राणायामश्च।

**5. शारीरिकसंरचना** - उत्तमव्यक्तित्वस्य प्रतीकः शारीरिकसंरचना अपि भवति। शारीरिकसंरचनायामेव वयं शारीरिकस्वास्थ्यं सम्मिलितं कुर्मः। यावत् शारीरिकपूर्णता न भविष्यति तावद् मानवस्य व्यवहारा अपि सामान्या न भवन्ति तथा च तस्य विकासोऽपि सन्तुलितं न भविष्यति। पातञ्जलयोगसूत्रे वर्णिता आसनैः शरीर हृष्टपुष्टं च भवति मुखमण्डले कान्तिः ओजस्विता च आयाति। शारीरिक विकारा दूरीकृत्य ऊर्जान्वितं शरीरस्य निर्माणं भवति।

**6. प्रसन्नचित्तम्** - श्रेष्ठव्यक्तित्वस्यविशेषता प्रसन्नचितम् अपि भवति। चित्तप्रसादनसन्दर्भे पतञ्जलिना प्रोक्तम्- ''मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्वितप्रसादनम्''[1] अर्थात् सर्वप्राणिषु सुखसम्भोगापन्नेषु मैत्रीं भावयेत, दुःखितेषु करुणाम्, पुण्यात्मकेषु मुदिताम्, अपुण्यात्मकेषु उपेक्षाम्। एवमस्य भावयतः शुक्लो धर्म उपजायते, ततश्च चित्तं प्रसीददति, प्रसन्नमेकाग्रं स्थितिपदं लभते।

**7. सकारात्मक-चरित्रम्** - श्रेष्ठव्यक्तित्वेन युक्तायाः व्यक्तेः सकारात्मकचरित्रं भवति। एतद् गुणायाः व्यक्तेः सकारात्मकं चरित्रम् परिदृश्यते। ''योगाङ्गानुष्ठानदशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः''[2] अर्थात् योगाङ्गानां अनुष्ठानेन अशुद्धिक्षयोपरान्ते ज्ञानदीप्तिः विवकेख्यातिपर्यन्तं भवति। पातञ्जलयोगसूत्रे वर्णिताः अष्टांगयोगः सकारात्मकचरित्रे सहायकः विद्यते। तत्र स्पष्टतया वर्णयति- ''यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि''[3] अर्थात् यमः, नियमः, आसनम्, प्रत्याहारः, धारणा, ध्यानम्, समाधिश्च योगाङ्गानि सन्ति। अत्र यमः अस्ति यत्- ''अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः''[4] अर्थाद् अहिंसा, सत्यम्, अस्तेयम्, ब्रह्मचर्याः, अपरिग्रहः यमाः सन्ति। इमे यमाः सकारात्मकचरित्रस्य द्योतकाः सन्ति। ''शौचसन्तोषतपस्वाध्यायेश्वरप्रणिधानानि नियमाः[5] अर्थात् शौचः, सन्तोषः, तपः, स्वाध्यायः, ईश्वरप्रणिधानम् इत्यादय नियमाः सन्ति। निष्कर्षतः कथितुं शक्यते यत् अष्टांगयोग सकारत्मकचरित्रे सहायका भवति, येन विनयशीलताया अपि विकास भवति।

उत्तमव्यक्तित्वविकासे पातञ्जलयोगसूत्रस्य भूमिका महती वर्तते। अस्मिन् योगसूत्रे वर्णिता अष्टांगयोगस्तर्कपूर्णः वैज्ञानिकश्च अस्ति यदु उत्तमव्यक्तित्वविकासे महत्त्वपूर्णभूमिकाया निर्वहणं

---

1. पातञ्जलयोगसूत्रम्, 1.33
2. पातञ्जलयोगसूत्रम्, 2.28
3. पातञ्जलयोगसूत्रम्, 2.29
4. पातञ्जलयोगसूत्रम्, 2.30
5. पातञ्जलयोगसूत्रम्, 2.32

करोति। अत्र प्रथमं स्पष्टं करणीयं यत्- साङ्ख्यं योगं च विद्वद्जनाः प्रायः अभिन्नं मन्यन्ते।

**साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम्॥**[1]

अपि च-

**यात्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते।**
**एकं साख्यं च योगं च यः पश्यति स पश्यति॥**[2]

स्थूलसूक्ष्मशरीरसम्बद्धः स्वतन्त्रः पुरुषो (आत्मतत्त्वं) वर्तते। अयं जीवः स्वभावतः शुद्धचैतन्यस्वरूपो भवति। शरीरे निवसन्नप्ययं शारीरिकमानसिकविकारैर्मुक्तो भवति। शारीरिकविकारशून्योऽप्ययं जीवस्तादात्म्यात् स्वस्मिंस्तद्धर्मान् सुखदुःखादीन् समारोपयति। प्रकृतेः प्रथमविकारे चित्ते सत्त्वरजतमसां गुणानां प्राबल्यं भवति। जडमपि चित्तं चेतनपुरुषसंसर्गात् चेतनमिव भाति। चित्तं यदाश्रयं लभते तत्स्वरूपमेव गृह्णाति। आत्मसामीप्यात्तत्राप्यात्मप्रकाशः प्रतिबिम्बतो भवति। चित्तविकारद्वारैवात्मनः सर्वेषां विषयाणां बोधो जायते। यद्यपि आत्मनि स्वभावत न केऽपि विकारा भवन्ति, तथापि जले दृश्यमानचन्द्रप्रतिबिम्बवद् आत्मनि सर्वेषां विषयाणां प्रतिबिम्बदर्शनं जायते। प्रकृति त्रियगुणात्मिका वर्तते। अतः गुणाधारितव्यक्तित्वम् अपि त्रिविधं भवति-1 सात्विकम् 2. राजसिकम् 3. तामसिकम्। एतेषु सत्त्वगुणयुक्तं व्यक्तित्वं सर्वोत्तमं भवति। अस्मिन् व्यक्तित्वे सद्गुणाः, उच्चादर्शाः, नैतिकमूल्यानि च गुणा भवन्ति।

तमोगुणयुक्ताः जनाः कामभावनायुक्ताः, क्रोधयुक्ताः, अमानवीयगुणयुक्ताश्च भवन्ति। रजोगुणयुक्ता जनाः सत्त्वतमोगुणयोः मध्यश्रेण्यां भवन्ति। सत्वगुणयुक्ता जनाः उत्तमव्यक्तित्वश्रेण्याम् आयन्ति, रजोगुणयुक्ता जना मध्यमव्यक्तित्वश्रेण्यां भवन्ति, तथा च तमोगुणयुक्ता मानवा अधमश्रेण्यां परिगण्यते।

महर्षिपतञ्जलिना योगसूत्रे प्रतिपादितम् - ''योगश्चित्तवृत्तिनिरोधः''[3] अर्थात् चित्तवृत्तीनां निरोध एव योग उच्यते। अनन्तरं वृत्तयः कानि? अस्मिन् सन्दर्भे महर्षिणा प्रतिपातिदतम्- ''प्रमाणविपर्ययविकल्पनिद्रास्मृतयः''[4] अर्थात् क्लिष्टाः अक्लिष्टाश्च भेदेन वृत्तयः पञ्चधा भवन्ति। एतेषां वृत्तीनां निरोधो योगः कथ्यते। चित्तवृत्तीनां निरोधस्योपाय सन्दर्भे महर्षिपतञ्जलिः स्पष्टं करोति यत्- ''अभ्यासवैराग्याभ्यां तन्निरोधः''[5] अर्थात् अभ्यासेन वैराग्येण च चित्तवृत्तीनां निरोधो भवति।

---

1. श्रीमद्भगवद्गीता, 5.4
2. श्रीमद्भगवद्गीता, 5.5
3. पातञ्जलयोगसूत्रम्, 1.2
4. पातञ्जलयोगसूत्रम्, 1.6
5. पातञ्जलयोगसूत्रम्, 1.12

अत्राभ्यासस्य वैराग्यस्य च विषयं कथयति-'तत्र स्थितौ यत्नोऽभ्यासः'[1] अर्थात् तयोरुभयोः (अभ्यास वैराग्ये च) स्थितिविषयकयत्नस्य नाम अभ्यासः। अनन्तरम् - ''दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्।''[2] अर्थात् दृष्टे आनुश्रविके विषये वितृष्णः चितस्य यद् वशीकारज्ञानमस्ति, तदेव वैराग्यम्।

पातञ्जलयोगसूत्रे वर्णिताः पञ्चक्लेशाः यानि सन्ति, वयं कथितुं शक्यते तानि सर्वाणि अस्माकं व्यक्तित्वं प्रभावितं कुर्वन्ति। क्लेशानां सन्दर्भे महर्षिपतञ्जलि कथयति-

''अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः''[3] अर्थात् अविद्या, अस्मिता, रागः, द्वेषः अभिनिवेशश्च पञ्चधा क्लेशाः सन्ति। अर्थाद् योगे बाधकाः सन्ति।

**अविद्या** - ''अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्''[4] अर्थात् प्रसुप्तः तनु, विच्छिन्न उदारश्च एषु चत्वाररूपेषु विद्यमानानाम् अस्मितादिक्लेशानां प्रसवभूमिः (जन्मदायिनी) अविद्या अस्ति। एवञ्च-

''अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या।''[5] अर्थात् अनित्ये नित्यः, अशुचि शुचिः (पवित्रता), दुःखे सुखम्, अनात्मनि आत्मभावस्य (चेतनतायाः) ज्ञानं अविद्या वर्तते।

**अस्मिता** - 'दृग्दर्शनशक्त्योरेकात्मतेवाऽस्मिता'[6] अर्थात् पुरुषो दृक्शक्तिर्बुद्धिर्दशनशक्तिश्चित्त-मित्येतयोरेकस्वरूपात्तिरिवाऽस्मिता क्लेश उच्यते।

**रागः** - ''सुखानुशयी रागः''[7] अर्थात् सुखभोगहेतु चित्ते सुखभोगस्य तृष्णा जाग्रतो भवति, तस्य नाम रागः।

**द्वेषः** - ''दुःखानुशयी द्वेषः''[8] अर्थात् दुःखाभिज्ञस्य दुःखानुस्मृतिपूर्वो दुःखे तत्साधने वा यः प्रतिघो मन्युर्जिघासा क्रोधः सः द्वेष इति।

---

1. पातञ्जलयोगसूत्रम्, 1.13
2. पातञ्जलयोगसूत्रम्, 1.15
3. पातञ्जलयोगसूत्रम्, 2.3
4. पातञ्जलयोगसूत्रम्, 2.4
5. पातञ्जलयोगसूत्रम्, 2.5
6. पातञ्जलयोगसूत्रम्, 2.6
7. पातञ्जलयोगसूत्रम्, 2.7
8. पातञ्जलयोगसूत्रम्, 2.8

**अभिनिवेशः** - ''स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः''[1] अर्थात् यत् स्वरसवाही (सहजेन स्वभाविकरूपेण) रूपेण मृत्युभयो मूढाणां समान विद्वज्जनेष्वपि प्रसिद्धोऽस्ति। अस्य नामः अभिनिवेशः। सर्वस्य प्राणिन इयमात्माशीर्नित्या भवति, 'मा न भूवं भूयासम्' इति। न चाननुभूतमरणधर्मकस्यैषा भवत्यात्माशीः, एतया च पूर्वजन्मानुभवः प्रतीयते। स चायमभिनिवेशः क्लेशः स्वरसवाही कृतेरपि जातमात्रस्य, प्रत्यक्षानुमानागमैरसम्भवति मरणत्रासच्छेददृष्ट्यात्मकः पूर्वजन्मानुभूतं मरणदुःखमनुमापयति। अत्र एतद् कथितुं शक्यते यदुत्तमव्यक्तित्वस्य विकासार्थ अविद्याया दग्धबीजरूपेण (समूलरूपेण) विनाशं करणीयः। ये जना अविद्यया वास्तविकस्वरूपेण भिन्नाः सन्ति। ते जनाः योगमार्गे संलग्ना भूत्वा महानव्यक्तित्वं प्राप्तुं शक्नुवन्ति। रागं द्वैषञ्च त्यक्त्वा अनन्ताचारविचारव्यवहाराणां संस्काराणां च ग्रहणं कृत्वा श्रेष्ठमार्ग प्रति प्रशस्ता भवन्ति। अभिनिवेशः (मरणभयः) कृमेरपि भवति, सिंहेऽपि भवति, मनुष्येषु अपि भवति। सर्वस्य प्राणिन इयमात्माशीर्नित्याः भवति, 'मा न भूव भूयासम्' इति। न चाननुभूतमरणधर्मकस्यैषा भवत्यात्माशीः, एतया च पूर्वजन्मानुभवः प्रतीयते। अतः पातञ्जलयोगसूत्रं पूर्वजन्मं स्वीकरोति। अस्माभि शुभाशुभकर्मादिमाध्यमेन भिन्न-भिन्न योनिषु जन्म प्राप्यते इति विद्वद्जना वदन्ति। उचितव्यक्तित्व निर्माणार्थ श्रेष्ठकर्मा अवश्यमेव करणीयम्।

अतः यः व्यक्तिः अविद्या, अस्मिता, रागः, द्वेषः अभिनिवेशश्च इत्यादयाः उत्तमव्यक्तित्व विकासे बाधकाः सन्ति। उत्तमव्यक्तित्व निर्माणार्थ पंचक्लेशानां त्यागम् अवश्यमेव करणीयम्।

**अष्टाङ्गयोगः** - भारतीययोगग्रन्थेषु विभिन्नप्रकारकयोगानां वर्णनं लभ्यते। यथा- कर्मयोगः, भक्तियोगः, यन्त्रयोगः, तन्त्रयोगः, ज्ञानयोगः, नादयोगः, हठयोगः, लययोगः, राजयोगश्चेत्यादि। अत्र सार्वाधिकमप्रचलितः वैज्ञानिकतायाः आधारेण अनुसन्धानयुक्तः योगः अस्ति राजयोगः, अयं अष्टाङ्गयोगोऽपि कथ्यते। अष्टाङ्गयोगः पातञ्जलयोगसूत्रे सन्निहितम्।

'यमनियमानसनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि'[2] अर्थात् यमः, नियमः, आसनम्, प्राणायामम्, प्रत्याहारंः, धारणा, ध्यानम्, समाधिश्च योगस्य अष्टाङ्गानि सन्ति।

यमः - 'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः'[3] अर्थात् अहिंसा, सत्यम् अस्तेयः, ब्रह्मचर्यम्, अपरिग्रहश्च यमाः सन्ति।

1. **अंहिसा** - पतञ्जिलना स्वीकृतेषु यमेषु अहिंसा प्रथमा स्वीकृता वर्तते। अहिंसायाः परिभाषा यद्यपि तेन कुत्राऽपि नैव कृताऽस्ति, तथाऽपि अहिंसाप्रतिष्ठासाधनायाः फलतया वैरत्यागः सह स्वीचकार। तन्मते वैरमूला भावनाः वैरमूलाः क्रियाश्चैव हिंसात्वेन स्वीकर्त्तव्याः सन्ति। वैरभावप्रवधेन प्रायशः त्रीणि कारणानि भवन्ति। लोभो मोहो क्रोधश्चेति अप्राप्तस्य पदार्थस्य प्राप्तिकामनायां प्राप्ताधिकप्राप्तये चापि लोभः कारणं भवति। अप्राप्तौ च प्राप्तिबाधकारणभूतं प्रति वैरभावो ह्याविर्भवति।

1. पातञ्जलयोगसूत्रम्, 2.9
2. पातञ्जलयोगसूत्रम्, 2.29
3. पातञ्जलयोगसूत्रम्, 2.30

प्राप्तपदार्थस्य संरक्षणे सम्प्रति मोहः कारणं भवति। मोहवशादेव पुरुषो वैरवान् भवति। यत्प्रभावात् किमपि पदार्थजातमात्मीयतप संरक्षितुं पुरुषो नैव प्रभवति। अनेकदा च पुरुषस्य कथमप्युत्पन्नः क्रोधः हिंसाया प्रवर्तते। एवम् अहिंसासाधनायां हिंसा-निवृतौ लोभमोहक्रोध-रूपा मनोदोषाः सर्वथाऽपाकरणीया भवन्ति। सहैव च तत् सम्बन्धिनोऽप्यनेके मनोभावा जेतव्या भवन्ति।

अहिंसा साधना न केवल हिंसानिवृत्या साधकाय सामाजिकं सैहार्द जनयति परमिह तस्य मनोभावाञ्चापि परिष्करोति। उत्तम व्यक्तित्वस्य निर्माणेऽपि सहायकाः। महर्षिपतञ्जलिना मूलतः हिंसा त्रिधाः-कृत-हिंसा, कारितहिंसा, अनुमोदितहिंसा च। 'अहिंसा प्रतिष्ठायां तत्सन्निधौ वैरत्यागः'[1] इयं च वैरनिवृत्तिर्न केवलं मानवेषु परं साधकस्यान्तिकं समुपगतानां सर्वेषामपि प्राणिनां भवति।

**सत्यम्** - सत्यं यमेषु द्वितीयमिति। कस्यामप्यवस्थायामसत्यभाषणाभावः सत्यमित्यभिधीयते। 'सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्'[2] धार्मिको भूया इति भवति धार्मिकः, स्वर्ग प्राप्नुहीति स्वर्ग प्राप्नोति, आमोघास्य वाग्भवति। असत्यभाषणकत्तारो जनस्य कोऽपि विश्वासो न करोति। सः समाजे अनृतभाषणस्य कृते तिरस्कृता भवति। तस्य व्यक्तित्वं दुर्व्यक्तित्वस्य परिचायको भवति। अतः सुव्यक्तित्व उचितव्यक्तित्वस्य च विकासार्थ सत्य भाषणमेव करणीयम्।

**अस्तेय** - अस्तेयं यमेषु तृतीय स्थाने आयाति। स्तेयमशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणम्। तत् प्रतिषेधः पुनः स्पृहारूपमस्तेयमिति। अथवा चौर्याभावोऽस्त्येयो भवति। अतः या मनुष्याः चौर्यप्रवृतया सन्ति, तेषां व्यक्तित्वं अधमं व्यक्तित्वं भवति। सः मनुष्य विद्यालये, राष्ट्रे अथवा प्रत्येकं स्थाने तिरस्कृता भवति। निष्कर्षत उत्तमव्यक्तित्वनिर्माणार्थ स्तेयभावस्य त्यागं करणीयम्।

'अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्'[3] अर्थात् अस्तेयप्रतिष्ठायां सर्वदिक्स्थान्य उपतिष्ठन्ते रत्नानि।

**ब्रह्मचर्यम्** - विषयवासनानां सर्वथा त्याग एव ब्रह्मचर्यमित्युच्यते। गुप्तेन्द्रिवस्य उपस्थस्य संयमो ब्रह्मचयन् भवति। ''ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः''[4] यस्य लाभादप्रतिघान् गुणानुत्कर्षयति, सिद्धश्च विनेयेषु ज्ञानमाधातुं समर्थो भवतीति। ब्रह्मचर्यपालने कायः (शरीरम्) कान्तिमान् भवति। ब्रह्मचर्यपालनेन तेजस्वितं युक्तं भवति मुखमण्डलम्। येन शरीरमोजवान् प्रदर्शयति। अतः ब्रह्मचर्येणोऽपि उत्तम व्यक्तित्वस्य निर्माणं भवति।

**अपरिग्रहः** - विषयाणाम् अर्जनरक्षणक्षयसङ्गहिंसादोषदर्शनादस्वीकरणम् अपरिग्रह इति। लोभत्यागस्य अपरनामधेयमेव अपरिग्रहोऽस्ति। आवश्यकताया अधिकवस्तुसंङ्ग्रहो न करणीयम्। एतदेवापरिग्रहोऽस्ति।

**नियमाः** - "शौचसन्तोषतपस्वाध्यायेश्वरप्रणिधानानि नियमाः''[5] अर्थात् शौचः, सन्तोषः, तपः, स्वाध्यायः ईश्वरप्रणिधानमञ्च नियमाः सन्ति।

1. पातञ्जलयोगसूत्रम्, 2.35
2. पातञ्जलयोगसूत्रम्, 2.36
3. पातञ्जलयोगसूत्रम्, 2.37
4. पातञ्जलयोगसूत्रम्, 2.38
5. पातञ्जलयोगसूत्रम्, 2.32

**शौचः** – मृत जलादिजनितं मेध्याभ्यवहरणादि च ब्रह्मं शौचम्। आभ्यन्तरं चित्तमलानामाक्षालनम्। 'शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः'[1] अर्थात् स्वाङ्गे जुगुप्सायां शौचमारभमाणः कायावद्यदर्शी कायानभिष्वङ्गी यतीर्भवति। किञ्च परैपरसंसर्गः, कायस्वभावावलोकी स्वमपि कायं जिहासुः मृज्जलादिभिराक्षालयन्नपि कायशुद्धिमपश्यन् कथं परकायैरत्यन्तमेवाप्रयतैः संसृज्येत्। अतः स्नानादिना बाह्यशरीरशुद्धिः, मैत्री करूणा मुहितादिभिश्च आन्तरिकशुद्धिर्भवति।

**सन्तोषः** – सन्निहितसाधनादधिकस्यानुपादित्सा सन्तोषः। ''सन्तोषादनुत्तमः सुखलाभः''[2] यत् च कामसुखं लोके यञ्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखयैते नार्हतः षोडशीं कलाम्। मनुष्यान् यदा सन्तोषो भवति; तर्हि तृष्णायानाशं भवति, इच्छाया अभावो भवति। अतः सन्तोषरूपी अमृतपानं करणीयम्।

**तपः** – ''तपो द्वन्द्वसहनम्'' शीतोष्णादिद्वन्द्वसहिष्णुत्वं तप उच्यते। ''कायेन्द्रियसिद्धिर-शुद्धिक्षयात्तपसः''[3] निर्वृत्त्यमानमेव तपो हिनस्त्यशुद्ध्यावरणमलं तदावरणमलापगमात्कायसिद्धिरणिमाद्यां, तथेन्द्रियसिद्धिर्दूराच्छ्रूवणदर्शनाद्येति।

**स्वाध्यायः** – मोक्षशास्त्रणामध्ययनं प्रणवजपो वा स्वाध्यायः। ''स्वाध्यायादिष्टदेवतासम्प्रयोगः।''[4] देवा ऋषयः सिद्धाश्च स्वाध्यायशीलस्य दर्शनं गच्छन्ति, कार्ये चास्य वर्तन्त इति।

**ईश्वरप्रणिधानम्** – ईश्वरप्रणिधानं तस्मिन्नपरमगुरौ सवकर्मार्पणम्।

''समाधिसिद्धिरीश्वरप्रणिधानात्''[5] ईश्वरर्पितसर्वभावस्य समाधिसिद्धिर्यया सर्वमीप्सितमवितथं जानाति देशान्तरे कालान्तरे च, ततोऽस्य प्रज्ञा यथाभूतं प्रजानातीति।

**आसनम्** – ''स्थिरसुखमासनम्''[6] तद्यथा पद्मासनम्, वीरसनम्, भद्रासनम्, स्वास्तिकासनम्, दण्डासनम्, सोपाश्रयम्, पर्यङ्कम्, कौञ्चनिषदनम्, हस्तिनिषदनम्, उष्ट्रनिषदनम्, समसंस्थानम्, स्थिरसुखं यथासुखञ्च इत्येवमादीति। रोगादिसङ्ग्रस्तेन वपुषा नैव समाधिलाभः कर्तुं शक्यते। अत एव आरोग्यलाभाय आसनम् अपेक्षितम्। आसनानां यथानियमम् अभ्यासेन शरीरं स्नायुमण्डलञ्च पूर्णरूपेण वशीकर्तुं प्राप्यते। कथितमपि – स्वस्थशरीरे स्वस्थमष्तिकस्य निर्माणं भवति। अतः आसनैः शरीरे सकारात्मकं प्रभावो भवति।

**प्राणायामः** – ''तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः''[7] सत्यासनजये बाह्यस्य वायोराचमनं श्वासः, कौष्ठस्य वायोर्निःसारणं प्रश्वासः, तपो गतिविच्छेद उभयभावः प्राणायामः। प्राणायामस्य नियताभ्यासेन श्वासनियन्त्रणं जायते। पूरक-कुम्भक-रेचकाख्यस्त्रयः प्राणायामाः। श्वासस्याभ्यान्तरभाग आकर्षणं पूरक प्राणामयो निगद्यते। आकृष्टस्य श्वासस्य निरोधः कुम्भकप्राणायामो भवति। नियमितविधिनावरोधितश्वासस्य बहिःस्त्यागो रेचकाख्यां भजति। प्राणायाममहत्त्वं

1. पातञ्जलयोगसूत्रम्, 2.40
2. पातञ्जलयोगसूत्रम्, 2.42
3. पातञ्जलयोगसूत्रम्, 2.43
4. पातञ्जलयोगसूत्रम्, 2.44
5. पातञ्जलयोगसूत्रम्, 2.45
6. पातञ्जलयोगसूत्रम्, 2.46
7. पातञ्जलयोगसूत्रम्, 2.49

साम्प्रतिकैर्वैज्ञानिकपदवाच्यैरपि स्वीक्रियते। चित्तस्य प्रसारभूमय नाड्यः सन्ति। तासां शुद्धेः परमसाधनं प्राणायामोवर्तते। प्राणायामाभ्यासेन शरीरे दाढर्यमायाति, मनश्चाञ्चल्यं नश्यति, स्मरणशीलता वर्धते, शारीरिकरोगा उपद्रवाश्च शाम्यन्ति। परिणामतः अस्माकं व्यक्तित्वे उज्जवलतायाति।

**प्रत्याहारः** – "स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः"[1] स्वविषयासम्प्रयोगाभावे चित्तस्वरूपानुकार इवेति, चित्तनिरोधे चित्तवन्निरूद्धानीन्द्रियाणि, नेतरेन्द्रियजयवदुपायान्तरमपेक्षन्ते। यथा मधुकरराजं मक्षिका उत्पतन्तमनूत्यतन्ति, निविशमानमनु निविशन्ते, तथेन्द्रियाणि चित्तनिरोधे निरूद्धानि, इत्येष प्रत्याहारः। निष्कर्षतः प्रत्याहारेण संवेगेषु नियन्त्रणं भवति। "ततः परमावश्यतेन्द्रियाणाम्"[2] प्रत्याहारेण इन्द्रियाणां परमवश्यता भवति। संवेगेषु नियन्त्रणम् उत्तम व्यक्तित्वस्य परिचायको (बोधको) वर्तते।

**धारणा** – 'देशबन्धश्चितस्य धारणा।'[3] नाभिचक्रे, हृदयपुण्डरीके, मूर्घ्नि ज्योतिषि, नासिकाग्रे, जिह्वागे, इत्येवमादिषु देशेषु, बाह्ये वा विषये चित्तस्य वृत्तिमात्रेण बन्ध इति धारणा।

**ध्यानम्** – "तत्र प्रत्ययैकतानता ध्यानम्"[4] तस्मिन् देशे ध्येयालम्बनस्य प्रत्ययस्यैकतानता सदृशप्रवाहः प्रत्ययान्तरेणापरामृष्टोध्यानम्। ध्यानशक्तिमुत्पन्नं कृत्वा साधकः कस्यापि विषयं केन्द्रितं कृत्वा ध्यानं कर्तु शक्यते। धारणायां यत् प्रत्ययास्ति तत् जलबिन्दुधारा इव वर्तते। एवञ्च ध्याने यत् प्रत्ययमस्ति, तत् तैलस्य मधोः च धाराया इव एकतानं वर्तते। एकतानतायाः तात्पर्यमिदमेव वर्तते। मनस एकाग्र एकतानभावश्चैव ध्यानम्।

**समाधिः** – "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः"[5] ध्यानमेव ध्येयाकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति, ध्येयस्वभावावेशात् तदा समाधिरित्युच्यते।

निष्कर्षतः सयंमस्य (धारणा, ध्यानम्, समाधिः) मुख्योद्देश्यं चित्ते स्थिरत्वं प्रदानम्। प्रायः चित्ते चञ्चलभावीः विद्यमानः। यस्य मनः अस्थिरं वर्तते, सः कस्यापि समस्यायाः निदाने सक्षम न भवति। अस्माकं विषयर्वासना अथवा अनन्ता इच्छा एव मानसिक अशान्त्या कारणानि सन्ति। ध्यानेन चित्तः पूर्णतः शान्तमन्तर्मुखीश्च भवति। ध्यानेन मनः सांसारिकमाकाध्यात्मिकञ्च उपलब्ध्यः प्राप्नोति। यदा मन बहुर्मुखी भवति तदा सांसारिकं भवति। यदा अर्न्तमुखी भवति तदा आध्यात्मिकं उपलब्ध्यः प्राप्नोति। मानवस्य कृते अस्मिन् जगति श्रेष्ठतम जीवनयापने द्वौ दिशे आवश्यीकी सन्ति। मनस्य एकस्मिन् विषये प्रतिदिनं एकाग्रभवनमस्य क्षमता वर्द्धति। लेखकः, कलाकारः, सङ्गीतज्ञः, चित्रकारः, गायकः, वैज्ञानिक एतेषां जनानां इत्थमिमनस्य क्षमता विकसिता पश्यति प्रायः। ध्यानेन मस्तिष्कात् एल्फा तरङ्गानि उद्घाटितं भवन्ति; येन मनसि शान्ति सृजनशीलता आयाति। व्यक्तित्वस्य आधुनिकमनोविज्ञानानुसारं निम्न घटकाः सन्ति, यान् योगद्वारा सन्तुलितं विकसितञ्चकृत्वा व्यक्तित्वविकासः कर्तुं शक्यते।

1. **बुद्धिः** – आसनं प्राणायामाभ्यासाच्च ध्यानाच्च बुद्धिर्लब्धिर्वर्द्धति।
2. **प्रेरणा** – योगाभ्यासात् सकारात्मकमुर्जा प्राप्तं भवति, येनावरोधेषु विजयं पातुं सदैव अभिप्रेरितं भवति मानवः।

---

1. पातञ्जलयोगसूत्रम्, 2.54
2. पातञ्जलयोगसूत्रम्, 2.55
3. पातञ्जलयोगसूत्रम्, 3.1
4. पातञ्जलयोगसूत्रम्, 3.2
5. पातञ्जलयोगसूत्रम्, 3.3

